गजतः। मुखदुन्दुभिकामपि वादयतः। मुखशंखं मुखभेरीम्। मयूरविरुतमपि केकायेते कोकिलविरुतमपि विकूजतः। हस्तियुद्धमपि कुरुतः। अश्वयुद्धम् ऋषभयुद्धं महिषयुद्धमजयुद्धं पिण्डकयुद्धं स्त्रीयुद्धं पुरुषयुद्धं कुमारकयुद्धं कुमारिकायुद्धं कुक्कुटयुद्धं वर्तकयुद्धं लावकयुद्धं कुरुतः कारयतः। इमानि चान्यानि चाश्रामणकानि कर्माणि कुरुतः कारयतः। तयोस्तया ईर्यया चर्यया प्रतिपत्त्या किटागिरिमनागताश्च भिक्षवो नागच्छन्ति। आगताश्च नाभिरमन्ते त्यजन्ति किटागिरौ वासम्। किटागिरिनिवासिनश्च ब्राह्मणगृहपतयो नात्तमनसो नाभिराद्धाः। नैवासिकानामपि चिरानुगतानां कृच्छ्रेण पिण्डकं दातव्यं कर्तव्यं मन्ये। कः पुनर्वाद आगन्तुकानाम्।

यावदपरेण समयेनायुष्मानानन्दः काशीषु जनपदेषु चारिकां चरन् किटागिरिमनुप्राप्तः। किटागिरौ विहरति किटागिरीयके दावे। अथायुष्मानानन्दः पूर्वाह्णे निवास्य पात्रचीवरमादाय किटागिरिं पिण्डाय प्रविष्टः। स यथा धौतेन पात्रेण किटागिरिं पिण्डाय प्रविष्टस्तथा धौतेनैव पात्रेण प्रतिनिष्क्रान्तः अलब्ध्वा दानमलब्ध्वा प्रत्याख्यानम्। अन्तत एकभिक्षामपि। अथायुष्मत आनन्दस्यैतदभवत्। पूर्वं चायं किटागिरिर्ऋद्धश्चाभूत् स्फीतश्च क्षेमश्च सुभिक्षश्चाकीर्णबहुजनमनुष्यश्च सुलभाश्चारुपिण्डका याचनकेन। एतर्ह्यप्ययं किटागिरिर्ऋद्धश्च स्फीतश्च क्षेमश्च सुभिक्षश्चावकीर्णबहुजनमनुष्यश्च। अथ च पुनरहं यथा धौतेनैव पात्रेण प्रविष्टस्तथा धौतेन पात्रेण

प्रतिनिष्क्रान्तः अलब्ध्वा दानमलब्ध्वा प्रत्याख्यानम् । अन्ततं एकभिक्षामपि । मा हैव नु केनचिद् भगवतः श्रावकेण मूढेनाव्यक्तेनाकुशलेन क्लेशवशात्कुलस्त्री वा कुलकुमारी वा आभाषिता वा भविष्यत्यामृष्टा वा परिभाषिता वा ।

तेन खलु समयेन किटागिरीयकानां ब्राह्मणगृहपतीनां संस्थागारे पंचमात्राणि ब्राह्मणगृहपतिशतानि संनिषण्णानि संनिपतितानि केनचिदेव करणीयेन । अथायुष्मानानन्दो येन किटागिरीयकानां ब्राह्मणगृहपतीनां संस्थागारस्तेनोपसंक्रान्तः। उपसंक्रम्य किटागिरीयकान् ब्राह्मणगृहपतीनिदमवोचत् । पूर्वं चायं भदन्त किटागिरिः पूर्ववद्यावदलब्ध्वा एकभिक्षामपि । एवमुक्ताः किटागिरीयका ब्राह्मणगृहपतय इन्द्रियाण्युत्क्षिप्यावस्थिताः । तेन खलु समयेनोदकप्लोतिक उपासकस्तस्यामेव परिषदि संनिषण्णोऽभूत् संनिपतितः । अथोदकप्लोतिक उपासक आयुष्मन्तमानन्दं बाहु गृहीत्वैकान्ते प्रक्रम्यायुष्मन्तमानन्दमिदमवोचत् । यत् खलु भदन्तानन्द जानीया अस्मिन्किटागिरावश्वकपुनर्वसुकौ भिक्षू प्रतिवसतः कुलदूषकौ पापधर्मसमुदाचारौ तौ मातृग्रामेण सार्धं संजल्पतः पूर्ववद्यावत् ।

आयुष्मन्नानन्द पूर्ववद्यावद् यथा संघावशेषे कुलदूषकशिक्षापदेऽश्वकपुनर्वसुकयोर्भिक्ष्वोः प्रवासनीयं कर्म कुरु । एवं च पुनः कर्तव्यम् । अन्तर्मार्गे स्थित्वा चोदको भिक्षुः संमन्तव्यः । पंचभिर्धर्मैः समन्वागतश्चोदको भिक्षुः पूर्ववद्यावत्कर्म कुर्वन्ति ।

शृणोतु भदन्तः संघः। इमावश्वकपुनर्वसुकौ भिक्षू कुलदूषकौ पापधर्मसमुदाचारौ। आभ्यां कुलानि दूषितानि दृश्यन्तेऽपि श्रूयन्तेऽपि प्रज्ञायन्तेऽपि। पापकश्चानयोः समुदाचारः दृश्यन्तेऽपि श्रूयन्तेऽपि प्रज्ञायन्तेऽपि। स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघः अश्वकपुनर्वसुकयोर्भिक्ष्वोः कुलदूषकयोः पापधर्मसमुदाचारिणोः प्रवासनीयं कर्म कुर्यादिति। एषा ज्ञप्तिः। एवं च कर्म कर्तव्यं पूर्ववद्यावत्। एवं द्वितीया तृतीया कर्मवाचना कर्तव्या।

बुद्धो भगवान् श्रावस्त्यां विहरति जेतवने अनाथपिण्डदस्यारामे। तेन खलु समयेन श्रावस्त्यामन्यतमः श्रेष्ठी प्रतिवसति आढ्यो महाधनो महाभोगः। तेन सदृशात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता। सा अष्टानां वा नवानां वा मासानामत्ययादुत्तरे नक्षत्रे प्रसूता। दारको जातः। तस्य ज्ञातयः संगम्य समागम्य त्रीणि सप्तकान्येकविंशतिदिवसान् जातस्य जातिमहं कृत्वा नामधेयं व्यवस्थापयन्ति। किं भवतु दारकस्य नामेति। तेषामेतदभवत्। यस्मादयं दारक उत्तरे नक्षत्रे जातस्तस्माद् भवतु दारकस्योत्तर इति नामेति। तस्योत्तर इति नामधेयं व्यवस्थापितम्। स उन्नीयते वर्धते[1] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिर्मण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते[1] ह्रदस्थमिव पंकजम्। स यदा महान्संवृत्तस्तदा

1 Ms. वर्धिते

लिप्यामुपन्यस्तः। संख्यायां गणनायां मुद्रायामुद्धारे[1] न्यासे निःक्षेपे लिप्याः पारं गतः। उद्घाटको वाचकः पण्डितः पटुप्रचारः अष्टासु परीक्षासु कृतावी संवृत्तः। तद्यथा रत्नपरीक्षायां वस्तु-परीक्षायां वस्त्रपरीक्षायां दारुपरीक्षायां हस्तिपरीक्षायामश्वपरीक्षायां स्त्रीपरीक्षायां पुरुषपरीक्षायां च कृतावी संवृत्तः। यावदस्य पिता कालगतः। उत्तरो गृहस्वामी संवृत्तः। तेनापणः प्रसारितः। क्रीणाति विक्रीणीते। क्रयविक्रयेण जीविकां कल्पयति। सोऽपरेण समयेन भगवतः सकाशमुपसंक्रान्तः। तस्य भगवद्दर्शनात् सद्धर्म-श्रवणाच्च भगवच्छासने प्रसादो जातः। प्रसादजातश्च प्रव्रज्याभि-लाषी संवृत्तः। स मातुः सकाशमुपसंक्रम्य कथयति। अम्ब अनु-जानीहि स्वाख्याते धर्मविनये प्रव्रजामीति। सा कथयति। त्वं ममैकपुत्रः। यावदहं जीवामि तावन्न प्रव्रजितव्यम्। मृतायां मयि यथेष्टं करिष्यसीति। स कथयति। अम्ब समयेनाहं न प्रव्रजामि। यदि त्वं दिवसे दिवसे संघोद्दिष्टकान्भिक्षून्भाजय-सीति। सा कथयति। पुत्र एवं करोमीति। स चोत्तरो यत्किंचिदुपार्जयति तत्सर्वं मात्रे तु प्रयच्छति। अम्बा अनेन श्रमणब्राह्मणान्प्रतिपादयति। सास्य माता मत्सरी[2] कुटकुंचिका[3] आगृहीतपरिष्कारा[4] काकायापि बलिं न प्रदातुं व्यवस्यति[5]

1 Cf. *Divyā*, p. 100.　　2 Tib 242b, 1 7 དེའི་མ་དེ་སེར་སྣ་ཅན།

3 *Ibid.* སྦྱར་འཆུམས་པ་ཞིག་སྟེ། Cf. Mvyut. 127. 50 कुरुकुचिः, कुट्टकुञ्चिकः।

4 Tib. 244a, l. 1. ཡོ་བྱད་ལ་ཞེན་པས།

5 *Ibid.* ཁ་ཏ་ལ་གཏོར་མ་སྦྱིན་པའི་སྤྲོ་བ་ཡང་མེད་ན།

प्रागेव श्रमणब्राह्मणान्प्रतिपादयिष्यति । ये तु श्रमणब्राह्मणाः पिण्डार्थिनस्तं गृहं प्रविशन्ति तान् परिभाषते तर्जयति च । प्रेतोपपन्ना इव यूयं नित्यं परगृहेभ्यो भिक्षामटथ इति[1] । तं च पुत्रं विप्रलम्भयति अद्य मया इयंतो भिक्षवो भाजिता इयन्तान् श्रमणब्राह्मणान्भिक्षा दत्तेति । सा तेन मात्सर्येण सेवितेन भावितेन बहुलीकृतेन कालं कृत्वा प्रेतेषूपपन्ना । उत्तरोऽपि मातृवियोगाद्दानानि दत्त्वा पुण्यानि च कृत्वा स्वाख्याते धर्मविनये प्रव्रजितः ।

सोऽपरेण समयेन म्रक्षषण्डायां[2] व्यवस्थितः । तमागम्य म्रक्षषंडनिवासी चित्रो गृहपतिर्भगवच्छासने प्रसन्नः । सोऽतीव बुद्धधर्मसंघेषु कारान्करोति । म्रक्षषंडो नाम अभ्यागतानां भिक्षूणां प्रतिसरणं संवृत्तः । यावदपरेण समयेनायुष्मत उत्तरस्यान्यतमस्मिन् कर्वटके किंचित्करणीयमुत्पन्नम् । स तत्र गतः । आयुष्मान् चोपसेनो बलान्तीपुत्रः[3] पंचशतपरिवारो जनपदचारिकां चरन् म्रक्षषंडमनुप्राप्तः । अश्रौषीच्चित्रो गृहपतिर्यथा उपसेनो बलान्तीपुत्रः पंचशतपरिवारो जनपदचारिकां चरन्निहानुप्राप्त इति । श्रुत्वा च पुनर्येनायुष्मानुपसेनस्तेनोपसंक्रान्तः । उपसंक्रम्यायुष्मत उपसेनस्य पादौ शिरसा वन्दित्वैकान्ते निषण्णः । एकान्तनिषण्णं चित्रं गृहपतिमायुष्मानुपसेनो धर्म्यया कथया संदर्शयति समादा-

1 Tib 243a, l. 2. སྨྲས་འོང་ངོ་ཞེས་ཁ་ཡང་ཟེར་ །

2 Tib 243a, l 6. ཤིང་སྨྲག་ཤའི་ཚལ་ན ། In Pāli Macchikāsanda, see CV. i. 18.

3 Tib 243b, l. 2 གར་མཁན་མའི་བུ །=नर्तकीपुत्र ।

पयति समुत्तेजयति संप्रहर्षयति। अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अथ चित्रो गृहपतिरुत्थायासनादेकांसमुत्तरासंगं कृत्वा येनायुष्मानुपसेनस्तेनाञ्जलिं प्रणम्यायुष्मन्तमुपसेनमिदमवोचत्। अधिवासयतु मे आर्य उपसेनश्चान्तर्गृहे भक्तेन सार्धं भिक्षुसंघेनेति। अधिवासयति आयुष्मानुपसेनश्चित्रस्य गृहपतेस्तूष्णींभावेन। अथ चित्रो गृहपतिरायुष्मत उपसेनस्य तूष्णींभावेनाधिवासनां विदित्वा शुचिप्रणीतं खादनीयभोजनीयं समुदानीय कल्यमेवोत्थायासनानि प्रज्ञपयति।

आयुष्मांश्चोत्तरस्तस्मात्कर्वटकादागतो यावत्पश्यति न शयनासनप्रज्ञप्तिं नाप्याहारमुपान्वाहृतम्। स आरामिकमामन्त्रयते। भवन्तः किमल्पोत्सुकास्तिष्ठथ। नासनप्रज्ञप्तिः क्रियते। नाप्याहार उपान्वाह्रियते। किं भिक्षुसंघेन भक्तच्छेदः करणीय इति। ते कथयन्ति। चित्रेण गृहपतिना भिक्षुसंघोऽन्तर्गृहे भक्तेनोपनिमन्त्रितः। किं ममागम्यम्[1]। न त्वया मा गम्यम्[2]। अपि तु आर्य उपसेनो बलान्तीपुत्रः पंचशतपरिवारो जनपदचारिकां चरन्निहानुप्राप्तः। स श्रुत्वा संजातामर्षः कथयति। अहं तस्य सर्वत्र पूर्वंगमः। कथमसौ मां प्रत्याख्यायायुष्मन्तमुपसेनं बलान्तीपुत्रं भिक्षुसंघमुपनिमन्त्रयति। गच्छामि तावत्पश्यामीति। स येन चित्रो गृहपतिस्तेनोपसंक्रान्तो यावत्पश्यति चित्रं गृहपतिमासनप्रज्ञप्तिं

1 Tib. 244a, l. 7 ཅི་ཁོ་བོ་ལས་བརྙེན་དེ་འམ།

2 Tib. 244b, l. 1 ཁྱོད་ལས་བརྙེན་དེ་ནི་མ་ཡིན་དེ་འོན་ཀྱང་འཕགས་པ།

क्रियमाणम् । स भूयस्या मात्रया पर्यवस्थितः । चित्रेण गृहपतिना-भिहितः । आर्य शोभना आसनप्रज्ञप्तिः । शोभनश्चाहार इति । चित्रो गृहपतिस्तिलपूपालिकावणिगासीत् । उत्तरः कथयति[1] । गृहपते शोभना आहारप्रज्ञप्तिः शोभनश्चाहारः । किं तु तिलपूपालिका[2] नास्ति । स कथयति । भदन्तोत्तर विज्ञातम् । येन ह्युपमां तावच्छृणु । उपमया च पुनरिहैके विज्ञपुरुषा भाषि-तस्यार्थमाजानन्ति । भूतपूर्वं भदन्तोत्तर संबहुला जाम्बूद्वीपकाः वणिजः सामुद्रं यानपात्रं प्रतिपाद्य काकं कुक्कुटीं चादाय महासमुद्रमवतीर्णा धनहारकाः । यावदसौ कुक्कुटी कुक्कुटमल-भमाना काकेन सार्धं संवासं गता । तयोः संवासात्तस्याः शावको जातः । स काककुंक्कुटीकं वाशते[3] । न. काको. न कुक्कुटः । एवमेव त्वं मोक्षार्थी प्रव्रजितो मोक्षमार्गमलभमानो यद्वा तद्वा प्रलपसि इति । एवमुक्ते आयुष्मानुत्तरः ताढककुंचिकां[4] च तस्य पुरस्तादुत्सृज्य संप्रस्थितः । तेनोक्तः । भदन्तोत्तर कुत्र गच्छसि । श्रावस्तीम् । स्वचित्तं प्रतिलभस्व । इहैव तिष्ठ । मा गच्छ । स्थानमेतद्विद्यते यत्त्वया पुनराग-

1 Tib. 244b, l 5· ཁྱིམ་བདག་ནག་པ་དེ་ལ་གྱི་ཁྱུར་བ་འཆིང་པའི་ཚོང་པ་ཡི་པས་ཆུ་སྟེད་ཀྱིས་སླས་པ །

2 In Pālı Tılasamgulikā

3 Ms. सकाकृत्तिका वा० Tıb 245a, 1. 2 དེ་གཉིས་འཚུགས་པ་ལས་ཕྲུ་གུ་བྱུང་བ་དེའི་ཁྭའི་སྐད་དང ། བྱ་གག་གི་སྐད་གཉིས་ཀ་འབྱིན་པས །

4 Tıb 245a, l 4 བརྩོན་པ་ཆུ་སྟེད་གར་བཞུད ། མཚན་ཡོད་དུའོ །

त्याहमेव क्षमयितव्यइति। तस्य वचनमवचनीकृत्य समादाय पात्रचीवरं येन श्रावस्ती तेन चारिकां प्रक्रान्तोऽनुपूर्वेण चारिकां चरन् श्रावस्तीमनुप्राप्तः। स भिक्षुभिर्दृष्ट उक्तश्च। स्वागतं स्वागतमायुष्मन्नुत्तर। प्रीता वयं त्वद्दर्शनेन। नो त्वागमनेन। किं कारणम्। त्वमागम्य चित्रो गृहपतिर्म्रक्षषण्डायां बुद्धधर्मसंघेषु कारान् करोति। आगन्तुकानां च गमिकानां च म्रक्षषण्डं प्रतिसरणम्। अस्त्येतदेवम्। मया चित्रो गृहपतिरवस्फंडितः[1]। यथाकथं तेन यथावृत्तमारोचितम्। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। कुरुत यूयं भिक्षवः उत्तरस्य भिक्षोर्गृहपतेरवस्फंडकस्य प्रतिसंहरणीयं कर्म इति। यो वा पुनरन्योऽप्येवंजातीयः।

पंचभिः कारणैः प्रतिसंहरणीयं कर्म कृतमधर्मकर्म च भवति। पूर्ववद्यावदसंमुखीभूतस्य कुर्वन्ति।

एवं च पुनः कर्तव्यम्। शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून्समनुयुज्य सर्वसंघे संनिषण्णे संनिपतिते एकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

श्रृणोतु भदन्तः संघः। अनेनोत्तरेण भिक्षुणा चित्रो गृहपतिरवस्फंडितः। स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघः उत्तरस्य भिक्षोर्गृहपतेरवस्फंडकस्य प्रतिसंहरणीयं कर्म कुर्यादिति। एषा ज्ञप्तिः। ततः कर्म कर्तव्यम्।

1 Tib. 245b, 1 2 དེ་ནི་ཁྱོད་ན་བདག་གིས་ཁྱིམ་བདག་ནག་པ་ལ་བརྙས་ཐབས་བྱིས་སོ།

शृणोतु भदन्तः संघः। अनेनोत्तरेण भिक्षुणा म्रक्षषण्डायां चित्रो गृहपतिरवस्फंडितः। तत्संघ उत्तरस्य भिक्षोर्गृहपतेरवस्फंडकस्य प्रतिसंहरणीयं कर्म करोति। येषामायुष्मतां क्षमन्ते उत्तरस्य भिक्षोर्गृहपतेरवस्फंडकस्य प्रतिसंहरणीयं कर्म कर्तुं ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। इयं प्रथमा कर्मवाचना। एवं द्वितीया तृतीया कर्मवाचना कर्तव्या। कृतं संघेनोत्तरस्य भिक्षोर्गृहपतेरवस्फंडकस्य प्रतिसंहरणीयं कर्म। क्षान्तमनुज्ञातं संघेन यस्मात्तूष्णीमेवमेतद्धारयामि।

प्रतिसंहरणीयकर्मकृतस्याहं भिक्षोरासमुदाचारिकान् धर्मान् प्रज्ञपयामि। प्रतिसंहरणीयकर्मकृतेन भिक्षुणा न प्रव्राजयितव्यम्। पूर्ववद्यावत्[1]।

स एवं प्रतिसंहरणीयकर्मकृत उत्कचप्रकचः संघे रोम पातयति। निःसरणं प्रवर्तयति। समीचीमुपदर्शयति। अन्तःसीमायां च स्थित्वा ओसारणां याचते। गृहपत्यवस्फंडकत्वाच्च प्रतिविरमामीति वदति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। ओसारयत यूयं भिक्षव उत्तरं भिक्षुं प्रतिसंहरणीयकर्मकृतमिति। यो वा पुनरन्योऽप्येवंजातीयः।

पंचभिः कारणैः प्रतिसंहरणीयकर्मकृत ओसारयितव्यः। कतमैः पंचभिः। उत्कचप्रकचः पूर्ववद्यावद् गृहपत्यवस्फंडकत्वाच्च प्रतिविरमामीति वदति।

1 See above, p. 7.

एवं च पुनर्वोसारयितव्यः। शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून्समनुयुज्य सर्वसंघे संनिषण्णे संनिपतिते एकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अनेनोत्तरेण भिक्षुणा म्रक्षषण्डायां चित्रो गृहपतिरवस्फंडितः। तदस्य संघेन गृहपतिरवस्फंडक इति कृत्वा प्रतिसंहरणीयकर्म कृतम्। सोऽयमुत्तरो भिक्षुः प्रतिसंहरणीयकर्मकृत उत्कचप्रकचः पूर्ववद्यावद् गृहपत्यवस्फंडकत्वाच्च प्रतिविरमामीति वदति। स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघः उत्तरं भिक्षुं प्रतिसंहरणीयकर्मकृतमोसारयेदिति। एषा ज्ञप्तिः। ततो वक्तव्यो गच्छ। तं गृहपतिं क्षमय। ओसारितो भविष्यसीति। स भिक्षुरेवमभिहितो येन म्रक्षषण्डस्तेन[1] चारिकां प्रक्रान्तोऽनुपूर्वेण चारिकां चरन् म्रक्षषण्डमनुप्राप्तः[1]। ततो मार्गश्रमं प्रतिविनोद्य येन चित्रो गृहपतिस्तेनोपसंक्रान्तः। उपसंक्रम्य दक्षिणं बाहुमभिप्रसार्य कथयति। क्षमस्व मम गृहपते। क्षान्तं भदन्तोत्तर यद्येवमिहैव प्रतिवस। गच्छामि तावद्येन ममापराद्धं तस्य निग्रहं करोमि। किं मयापराद्धम्। न तव। येन ममापराद्धम्।

अथायुष्मानुत्तरो गङ्गातीरं गत्वा त्रिभिस्तालवृन्तैः[2] कुटिकां कृत्वा वर्षोपगतः। तेन शवशीर्षोपमं[3] पात्रं धारितम्। तस्य

1 Ms म्रक्षशिण्ड॰

2 Ms ॰वृन्दैः ; Tib 247b, l 3 ཤིང་ཏཱ་ལའི་ལོ་མ་གསུམ་ལས་སྤྱིལ་པོ་བྱས་ཏེ།

3 *Ibid.* l. 4 དེས་མིའི་རོ་ལ་ཀླད་པ་འདྲ་བའི་ལྷུང་བཟེད་བཅངས་ཏེ།

नातिदूरे मार्गः। तेन सततं गोपाङ्गना गच्छन्ति। स तासां पात्रं प्रसारयति। तस्मिन्दधि वा क्षीरं वा उदश्विद्वानुप्रयच्छन्ति। तत्परिभुज्य ध्यानसमाधिसमापत्तिसुखानि अभिनामयति। यावदपरेण समयेन द्वे गोपाङ्गने गच्छतो माता दुहिता च। दुहिता मातुः कथयति। अम्ब एष आर्यो मूक इति। सा कथयति। पुत्रि नैष मूकः। नूनमनेन कस्यचिद्वाचापराद्धम्। तस्या एष निग्रहं करोतीति। अम्ब किमेतदेवं भविष्यति। पुत्रि श्वोऽहं तव प्रत्यक्षीकरिष्यामीति। यावदपरस्मिन् दिवसे मथितघटं गृहीत्वा दुहितृसमेता तं प्रदेशमागता। आयुष्मतोत्तरेण पात्रं प्रसारितम्। सा तस्य पात्रं मथितस्य पूरयितुमारब्धा। आयुष्मानुत्तरः पात्रं चालयति। सा ददात्येव। न संतिष्ठते। आयुष्मानुत्तरः कथयति। अलं भगिनि। किमनेन निरर्थकेन केनचिच्छोरितेन। सन्त्यन्ये अस्मद्विधाः प्रतिग्राहका इति। सा कथयति। पुत्रि न त्वं मया पूर्वमुक्ता। नायं मूकः। नूनमनेन कस्यचिद्वाचापराद्धम्। तस्या एष निग्रहं करोतीति। अवोचस्त्वमम्ब इति। तत्रायुष्मता उत्तरेण द्वाभ्यामन्तर्वर्षाभ्यामेका वाग्भाषिता। तृतीयेऽन्तर्वर्ष इदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य तमःस्कंधः प्रदालितः। अर्हन् संवृत्तः। पूर्ववद्यावत्पूज्यो मान्योऽभिवाद्यश्च संवृत्तः[1]। आयुष्मानुत्तरोऽर्हत्त्वप्राप्तो विमुक्तिप्रीतिसुखसंवेदी तस्यां वेलायां गाथां भाषते।

1 See *Gilgit Mss*, III, pt ii, p 130-1

त्रिभिर्मया तालवृन्तैर्गङ्गातीरे कुटी कृता ।
शवशीर्षोपमं पात्रं पांसुकुलं च चीवरम् ॥
द्वाभ्यामन्तर्वर्षाभ्यामेका वाग्भाषिता मया ।
तृतीये अन्तर्वर्षे तु तमःस्कंधः प्रदालितः ॥
गङ्गातीरनिवासी तु उत्तरः स्थविरो वशी ।
विमुक्तचित्तो हि अर्हन्निमा गाथा अभाषत ॥

बुद्धो भगवान् कौशाम्ब्यां विहरति घोषिलारामे । तेन खलु समयेनायुष्मांश्छन्द आपत्तिमापन्नो न पश्यति । एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति । भगवानाह । कुरुत यूयं भिक्षवश्छन्दस्य भिक्षोरापत्तेरदर्शनायोत्क्षेपणीयं कर्म इति । यो वा पुनरन्योऽप्येवंजातीयः ।

पंचभिः कारणैरापत्तेरदर्शनादुत्क्षेपणीयं कर्म कृतमधर्मकर्म च तद[विनय]कर्म च संघश्च तेन सातिसारः । कतमैः पंचभिः । अचोदयित्वा कुर्वन्ति पूर्ववद्यावदेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्[1] ।

श्रृणोतु भदन्तः संघः । अयं छन्दो भिक्षुरापत्तिमापन्नो यथाधर्मं न प्रतिकरोति । स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात संघो यत्संघश्छन्दस्य भिक्षोरापत्तेरदर्शनायोत्क्षेपणीयं कर्म कुर्यादिति । एषा ज्ञप्तिः । कर्म कर्तव्यम् ।

श्रृणोतु भदन्तः संघः । अयं छन्दो भिक्षुरापत्तिमापन्नो यथाधर्मं न प्रतिकरोति । तत्संघश्छन्दस्य भिक्षोरापत्तेरदर्शना-

1 See above p 5

योत्क्षेपणीयं कर्म करोति। यथा चायुष्मतां [क्षमन्ते] छन्दस्य भिक्षोरापत्तेरदर्शनायोत्क्षेपणीयं कर्म कर्तुं ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। इयं प्रथमा कर्मवाचना। पूर्ववद्यावद्यथा पाण्डुलोहितिकानामेतदेव निदानम्।

आयुष्मांश्छन्द आपत्तिमापन्नो यथाधर्मं न प्रतिकरोति। स सब्रह्मचारिभिरर्थकामैः पूर्ववद्यथा विभङ्गे[1]। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। कुरुत यूयं भिक्षवश्छन्दस्य भिक्षोरापत्तेरप्रतिकर्मायोत्क्षेपणीयं कर्म इति। यो वा पुनरन्योऽप्येवंजातीयः।

पंचभिः कारणैरापत्तेरप्रतिकर्मायोत्क्षेपणीयं कर्म कृतमधर्मकर्म च तदविनयकर्म [च] संघश्च तेन सातिसारः। कतमैः पञ्चभिः। अचोदयित्वा कुर्वन्ति। पूर्ववद्यावदेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अयं छन्दो भिक्षुरापत्तिमापन्नो यथाधर्मं न प्रतिकरोति। स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघश्छन्दस्य भिक्षोरापत्तेरप्रतिकर्मायोत्क्षेपणीयं कर्म कुर्यादिति। एषा ज्ञप्तिः। कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अयं छन्दो भिक्षुरापत्तिमापन्नो यथाधर्मं न प्रतिकरोति। तत्संघश्छन्दस्य भिक्षोरापत्तेरप्रतिकर्मायोत्क्षेपणीयं कर्म करोति। येषामायुष्मतां क्षमन्ते च्छन्दस्य भिक्षोरापत्तेरप्रतिकर्मायोत्क्षेपणीयं कर्म कर्तुं ते तूष्णीम्। न

1 Evidently it refers to the *Sūtravibhanga*

क्षमन्ते भाषन्ताम्। इयं प्रथमा कर्मवाचना। पूर्ववद्यावत्पांडु-लोहितिकानाम्।

बुद्धो भगवान् श्रावस्त्यां विहरति जेतवने अनाथपिण्डदस्या-रामे। तेन खलु समयेनारिष्टस्य भिक्षोरिदमेवंरूपं पापकं दृष्टिगतमुत्पन्नम्। तथाहं भगवतो धर्मं देशितमाजानामि यथा ये आन्तरायिका धर्मा उक्ता भगवता ते च प्रतिसेव्यमाना नालमन्तरायाय इति[1]। एतत्प्रकरणं भिक्षवो भगवत आरोच-यन्ति। भगवानाह। कुरुत यूयं भिक्षवः अरिष्टस्य भिक्षोर-प्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयं कर्म इति। यो वा पुनरन्योऽप्येवंजातीयः।

पंचभिः कारणैरप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयं कर्म कृतमधर्मकर्म च तदविनयकर्म च संघश्च तेन सातिसारः। कतमैः पंचभिः। अचोदयित्वा कुर्वन्ति। पूर्ववद्यावदेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अस्यारिष्टस्य भिक्षोरिदमेवंरूपं पापकं दृष्टिगतमुत्पन्नम्। तथाहं भगवतो धर्मं देशितमाजानामि यथा ये आन्तरायिका धर्मा उक्ता भगवता पूर्ववद्यावत् संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघः अरिष्टस्य भिक्षोरप्रति-निसृष्टे पापके दृष्टिगते उत्क्षेपणीयं कर्म कुर्यादिति। एषा ज्ञप्तिः। कर्म कर्तव्यम्।

1 Cf. *Majjhima Nikāya*, I, p. 130, *Vinaya, Cullavagga*, p 27.

शृणोतु भदन्तः संघः। अस्यारिष्टस्य भिक्षोरिदमेवंरूपं पापकं[1] दृष्टिगतमुत्पन्नम्। तथाहं भगवतो धर्मं देशितमाजानामि पूर्ववद्यावत् संघः अरिष्टस्य भिक्षोरप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयं कर्म करोति। येषामायुष्मतां क्षमन्ते अरिष्टस्य भिक्षोरप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयं कर्म कर्तुं ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। इयं प्रथमा कर्मवाचना पूर्ववद्यावत् पांडुलोहितिकानाम्।

स एषः अप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयकर्मकृत उत्कचप्रकचः संघे रोम पातयति। पूर्ववद्यावद् दृष्टिगतं प्रतिनिसृजामीति वदति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। ओसारयत यूयं भिक्षवः अरिष्टं भिक्षुमप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयकर्मकृतमिति। यो वा पुनरन्योऽप्येवंजातीयः।

पंचभिः कारणैः प्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयकर्मकृत ओसारयितव्यः। कतमैः पंचभिः। उत्कचप्रकचः संघे रोम पातयति। पूर्ववद्यावदेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अस्यारिष्टस्य भिक्षोरिदमेवंरूपं पापकं दृष्टिगतमुत्पन्नम्। तथाहं भगवतो धर्मं देशितमाजानामि यथा ये आन्तरायिका धर्मा उक्ता भगवता ते प्रतिसेव्यमाना नालमन्तरायाय इति। तदस्य संघेन प्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयं कर्म कृतम्। सोऽयमरिष्टो भिक्षुरप्रतिनिसृष्टे पापके

1 Ms. पापकदृष्टिकं

दृष्टिगते उत्क्षेपणीयकर्मकृत उत्कचप्रकचः पूर्ववद्यावद् दृष्टिगतं च प्रतिनिसृजामीति वदति। स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघः अरिष्टं भिक्षुमप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयकर्मकृतमोसारयेदिति। एषा ज्ञप्तिः। एवं च कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अस्यारिष्टस्य भिक्षोरिदमेवंरूपं पापकं दृष्टिगतमुत्पन्नम्। पूर्ववद्यावत् संघः अरिष्टं भिक्षुमप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयकर्मकृतमोसारयति। येषामायुष्मतां क्षमन्ते अरिष्टमप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयकर्मकृतमोसारयितुं ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। इयं प्रथमा कर्मवाचना। एवं द्वितीया तृतीया कर्मवाचना। पूर्ववद्यावत् तूष्णीमेवमेतद्धारयामि।

बुद्धो भगवान् श्रावस्त्यां विहरति जेतवने अनाथपिण्डदस्यारामे। तेन खलु समयेनायुष्मानुदायी संघावशेषामापत्तिमापन्नः संचिन्त्य[1] शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। स एतत्प्रकरणं भिक्षूणामारोचयति। अहमायुष्मन्तं संघावशेषामापत्तिमापन्नं संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। किं मया करणीयम्। इत्येतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। ददत यूयं भिक्षव उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः।

1 In Palı *Saññıcca*, see Pārājıkā 3.

एवं च पुनर्दातव्यः। उदायिना भिक्षुणा शयनासन-प्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून्समनुयुज्य सर्वसंघे संनिषण्णे संनिपतिते उदायिना भिक्षुणा वृद्धान्ते उत्कुटुकेन स्थित्वा अञ्जलिं प्रगृह्य परिवासो याचितव्यः। एवं च पुनर्याचितव्यः।

शृणोतु भदन्तः संघः। अहमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य[1] शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। सोऽहमुदायी भिक्षुरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्र-विसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासं याचे। ददातु मे भदन्तः संघो ममोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमास-प्रतिच्छन्नाया अर्धमासं परिवासमनुकम्पयानुकम्पामुपादाय[2]। ततः पश्चादेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अयमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। सोऽयमुदायी भिक्षुरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्र-विसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासं याचते। स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघः उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टि-समुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासं दद्यादिति। एषा ज्ञप्तिः। एवं च कर्म कर्तव्यम्।

1 Pali. संचेतनिकं

2 Ms. ०कम्पकमनु०

शृणोतु भदन्तः संघः। अयमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। सोऽयमुदायी भिक्षुः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासं याचते। तत्संघः उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासं ददाति। येषामायुष्मतां क्षमन्ते उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासं दातुं ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। इयं प्रथमा कर्मवाचना। एवं द्वितीया तृतीया कर्मवाचना कर्तव्या। दत्तः संघे[न] उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः। क्षान्तमनुज्ञातं संघेन [यस्मात्] तूष्णीमेवमेतद्धारयामि।

स पारिवासिक एव संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। स एतत्प्रकरणं भिक्षूणामारोचयति। [अहमस्मि] आयुष्मन्त उदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः

अर्धमासं [परिवासः]। सोऽहं पारिवासिक एव संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। किं मया करणीयमिति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। ददत यूयं भिक्षव उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेरन्तरापत्तेः पूर्वापत्ति[प्रति]रूपायाः प्रतिच्छन्नाया मूलपरिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः।

एवं च पुनर्दातव्यः। शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून्समनुयुज्य सर्वसङ्घे संनिषण्णे संनिपतिते उदायिना भिक्षूणा वृद्धान्ते[1] उत्कुटुकेन स्थित्वा अञ्जलिं प्रगृह्य इदं स्याद्वचनीयम्।

शृणोतु भदन्तः संघः। अहमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। [तेन मया] उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः। सोऽहं पारिवासिक एव संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। सोऽहमुदायी भिक्षुरस्याः संघावशेषाया आपत्तेरन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलपरिवासं [याचे]। ददातु भदन्तः संघो ममोदायिनो भिक्षोरस्याः संघावशेषायाः

1 Pāli · Vuddhānam bhikkhunam pāde vanditvā

आपत्तेरन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासमनुकंपयानुकम्पामुपादाय[1]। एवं द्विरपि त्रिरपि। ततः पश्चादेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अयमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः। दत्तः संघेनास्योदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः। सोऽयं पारिवासिक एव संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। सोऽयमुदायी भिक्षुरस्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलपरिवासं याचते। स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघः उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेरन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासं दद्यादिति। एषा ज्ञप्तिः। कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अयमुदायी भिक्षुः संघावशेषामापत्ति-[मापन्नः] संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। तेनानेन उदायिना भिक्षुणास्याः संघावशेषा[या] आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं

1 Ms ०कम्पकमनु०

परिवासो याचितः। दत्तः संघेनास्योदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासं परिवासः। सोऽयं पारिवासिक एव संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। सोऽयमुदायी भिक्षुरस्याः संघावशेषाया आपत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलपरिवासं याचते। तत्संघ उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासं ददाति। येषामायुष्मतां क्षमन्ते उदायिनो भिक्षोरस्याः संघावशेषाया [आपत्ते]रन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासं दातुं ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। इयं प्रथमा कर्मवाचना। एवं द्वितीया तृतीया कर्मवाचना वक्तव्या। दत्तः संघेन उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेरन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासः। क्षान्तमनुज्ञातं संघेन यस्मात्तूष्णीमेवमेतद्धारयामि।

स मूलपारिवासिक एव संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। स एतत्प्रकरणं भिक्षूणामारोचयति। अहमस्म्यायुष्मन्त उदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः मंघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थितायाः

अर्धमासं परिवासः। सोऽहं पारिवासिक एव संघावशेषा-मापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलपरिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासः। सोऽहं मूलपारिवासिक एव संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिम् [अन्तरापत्तिप्रति]रूपां प्रतिच्छन्नाम्। किं मया करणीयमिति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। ददत यूयं भिक्षव उदायिनो भिक्षोरस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षमिति। यो वा पुनरन्योऽप्येवंजातीयः।

एवं च पुनर्दातव्यः। शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून्समनुयुज्य सर्वसंघे सन्निषण्णे सन्निपतिते उदायिना भिक्षुणा वृद्धान्ते उत्कुटुकेन स्थित्वा अञ्जलिं प्रगृह्य इदं स्याद्वचनीयम्।

शृणोतु भदन्तः संघः। अहमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थितायाः

अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः। सोऽहं पारिवासिक एव संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषाया [अन्तरा]पत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलपरिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासः। सोऽहं मूलपारिवासिक एव संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। सोऽहमस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलापकर्षं याचे। ददातु भदन्तः संघो ममोदायिनो भिक्षोरस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षमनुकम्पयानुकम्पामुपादाय[1]। एवं द्विरपि त्रिरपि। ततः पश्चादेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अयमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः[2] संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः। दत्तः संघेनास्योदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः। सोऽयं पारिवासिक एव संघाव-

1 Ms °कम्पकमनु°    2 Ms °त्तिप्रतिपन्नः

शेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्ति[प्रतिरूपां] प्रतिच्छन्नाम् । तेनानेन उदायिना भिक्षुणा[स्याः] संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलपरिवासो याचितः । दत्तोऽस्य संघेनोदायिनो भिक्षोरस्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्ति[प्रति]रूपायाः प्रतिच्छन्नाया मूलपरिवासः । सोऽयं मूलपारिवासिक एव संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम् । सोऽयमस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलापकर्षं याचते । स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघः उदायिनो भिक्षोरस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षं दद्यादिति । एषा ज्ञप्तिः । कर्म कर्तव्यम् ।

शृणोतु भदन्तः संघः । अयमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम् । तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः । दत्तः संघेनास्योदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः । सोऽयं पारिवासिक एव संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम् । तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेरन्तरापत्तः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलपरिवासो याचितः ।

दत्तः संघेनास्योदायिनो भिक्षोरस्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासः। सोऽयं मूलपारिवासिक एव संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्ति[मन्तरा]पत्तिप्रतिरूपां प्रतिच्छन्नाम्। सोऽयमस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलापकर्षं याचते। तत्संघ उदायिनो भिक्षोरस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षं ददाति। येषामायुष्मतां क्षमन्ते उदायिनो भिक्षोरस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षं दातुं ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। इयं प्रथमा कर्मवाचना। एवं द्वितीया तृतीया कर्मवाचना कर्तव्या। दत्तः संघेन उदायिनो भिक्षोरस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षः। क्षान्तमनुज्ञातं संघेन यस्मात्तूष्णीमेवमेतद्धारयामि।

सोऽपरेण समयेन संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासः अन्तरापत्तेः पर्युषितमूलपरिवासः प्रत्यन्तरापत्तेर्मूलापकर्षपर्युषितो भिक्षूणामारोचयति। अहमस्म्यायुष्मन्त उदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थितायाः

अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः। सोऽहं पारिवासिक एव संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलपरिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासः। सोऽहं मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेन मया उदयिंना भिक्षुणास्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलापकर्षो[1] याचितः। दत्तः संघेन ममोदायिनो भिक्षोर[स्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्त]रापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षः। सोऽहमस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासः। अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितः। प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपाया मूलापकर्षपर्युषितः। किं मया करणीयम्। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। ददत यूयं भिक्षव उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासपर्युषितपरिवासस्यान्तरापत्तेर्मूलपरिवास-

1 Ms. मूलपरिवासो

पर्युषितस्य प्रत्यन्तरापत्तेर्मूलापकर्षपर्युषितस्य षड्रात्रं मानाप्यमिति। यो वा पुनरन्योऽप्येवंजातीयः।

एवं च पुनर्दातव्यः। शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून्समनुयुज्य सर्वसंघे संनिषण्णे संनिपतिते उदायिना भिक्षुणा वृद्धान्ते उत्कुटुकेन स्थित्वा अंजलिं प्रगृह्य इदं स्याद्वचनीयम्।

शृणोतु भदन्तः संघः। अहमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्[1]। तेन मया उदायिना भिक्षुणास्याः संघावशेषायां आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः। सोऽहं पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलपरिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासः। सोऽहं मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरा-

1 Ms. ०त्थिताया अर्धमासप्रतिच्छन्नयाः।

पत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलापकर्षो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षः।

सोऽहमुदायी भिक्षुरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासः अन्तरापत्तेर्मूलपरिवासपर्युषितः प्रत्यन्तरापत्तेर्मूलापकर्षपर्युषितः संघात् षड्रात्रं मानाप्यं याचे। ददातु भदन्तः संघो ममोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासस्य अन्तरापत्तेर्मूलपरिवासपर्युषितस्य प्रत्यन्तरापत्तेर्मूलापकर्षपर्युषितस्य षड्रात्रं मानाप्यमनुकम्पयानुकम्पामुपादाय। एवं द्विरपि त्रिरपि। ततः पश्चादेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

श‍ृणोतु भदन्तः संघः। अयमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः। दत्तोऽस्य संघेनोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः। सोऽयं पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया

मूलपरिवासो याचितः। दत्तः संघेनास्योदायिनो भिक्षोरस्याः संघावशेषाया अन्तरापत्तेः[1] पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया [मूलपरिवासः। सोऽयं] मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्ति[मन्तरापत्ति]प्रतिरूपां प्रतिच्छन्नाम्। तेनानेनोदायिना भिक्षुणास्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलापकर्षो याचितः। दत्तः संघेनास्योदायिनो भिक्षोरस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षः।

सोऽयमुदायी भिक्षुरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासः अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितः षड्रात्रं मानाप्यं याचते। स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघः उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासस्यान्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितस्य प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितस्य षड्रात्रं मानाप्यं दद्यादिति। एषा ज्ञप्तिः। एवं च कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अयमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्र[ति]च्छन्नाम्।

1 Ms भिक्षोरस्यामेव संघावशेषायामन्तरापत्तेः

तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः। दत्तोऽस्य संघेनोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः। सोऽयं पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्ति[प्रतिरूपां] प्रतिच्छन्नाम्। तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः [प्रतिच्छन्नायाः] संघान्मूलपरिवासो याचितः। दत्तः संघेनास्योदायिनो भिक्षोरस्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासः। सोऽयं मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः प्रत्यन्तरापत्ते[रन्तरापत्ति]प्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलापकर्षो याचितः। दत्तः संघेनास्योदायिनो भिक्षोरस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः[1] प्रतिच्छन्नाया मूलापकर्षः। सोऽयमुदायी भिक्षुरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासः अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितः षड्रात्रं मानाप्यं याचते। तत्संघः उदायिनो भिक्षोरस्याः संघाव-

1 Ms. ०षाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः

शेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमास-प्रतिच्छन्नायाः पर्युषितपरिवासस्यान्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितस्य ·प्रत्यन्तरापत्तेरन्तरापत्ति-प्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितस्य षड्रात्रं मानाप्यं ददाति। येषामायुष्मतां क्षमन्ते उदायिनो भिक्षोरस्याः संघाव-शेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमास-प्रतिच्छन्नायाः पर्युषितपरिवासस्यान्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितस्य प्रत्यन्तरापत्तेरन्तरापत्ति-प्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितस्य षड्रात्रं मानाप्यं दातुं ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। इयं प्रथमा कर्मवाचना। एवं द्वितीया तृतीया कर्मवाचना वक्तव्या। दत्तं संघेनोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टि-समुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासस्यान्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितस्य प्रत्य-न्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितस्य षड्रात्रं मानाप्यम्। क्षान्तमनुज्ञातं संघेन यस्मात्तूष्णीमेव-मेतद्धारयामि।

सोऽपरेण समयेन संघावशेषाया आपत्तेः संचिन्त्य शुक्र-विसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासः अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवास-पर्युषितः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितः षड्रात्रं चीर्णं मानाप्यं भिक्षूणामारोचयति।

अहमस्म्यायुष्मन्नुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासं परिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः। सोऽहं पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेरन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलपरिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासः। सोऽहं मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्ति[मन्तरापत्ति]प्रतिरूपां प्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलापकर्षो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षः। तेन मया उदायिना भिक्षुणा संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासेनान्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितेन प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मलापकर्षपर्युषितेन संघात

षड्रात्रं मानाप्यं याचितम्। दत्तं संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासस्यान्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितस्य प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितस्य षड्रात्रं मानाप्यम्। सोऽहमुदायी भिक्षुरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासः। अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितः। प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितः। षड्रात्रं चरितमानाप्यम्। किं मया करणीयम्। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। आवर्हत यूयं भिक्षव उदायिनं भिक्षुमस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासम्। अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितम्। प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितम्। षड्रात्रं चरितमानाप्यमिति। यो वा पुनरन्योऽप्येवंजातीयः।

एवं च पुनरावर्हितव्यः। शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून्समनुयुज्य सर्वसंघे संनिषण्णे संनिपतिते उदायिना भिक्षुणा वृद्धान्ते उत्कुटुकेन स्थित्वा चाञ्जलिं प्रगृह्य इदं स्याद्वचनीयम्।

शृणोतु भदन्तः संघः। अहमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्।

तेन मया उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शु[क्र]विसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः। सोऽहं पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलपरिवासो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासः। सोऽहं मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेन मया उदायिना भिक्षुणास्याः संघावशेषाया प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलापकर्षो याचितः। दत्तः संघेन ममोदायिनो भिक्षोरस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षः। तेन मया उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासेनान्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितेन प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितेन षड्रात्रं मानाप्यं याचितम्। दत्तं संघेन ममोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य

शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासस्यान्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितस्य प्रत्यन्तरापत्तोरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्यु षितस्य षड्रात्रं मानाप्यम्। सोऽहमुदायी भिक्षुरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्यु षितपरिवासः अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्यु षितः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्यु षितः षड्रात्रं चीर्णमानाप्यं संघादावर्हणं याचे। आवर्हतु मां भदन्तः संघः उदायिनं भिक्षुमस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः परिवासपर्यु षितमन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्यु षितं प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्यु षितं षड्रात्रं चीर्णमानाप्यमनुकम्पयानुकम्पामुपादायेति। एवं द्विरपि त्रिरपि। ततः पश्चादेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अयमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः। दत्तोऽस्य संघेन उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः। सोऽयं पारिवासिक एव

सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासो याचितः। दत्तोऽस्य संघेन उदायिनो भिक्षोरस्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासः। सोऽयं मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेनानेन उदायिना भिक्षुणास्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलापकर्षो याचितः। दत्तोऽस्य संघेन उदायिनो भिक्षोरस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षः। तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासेन अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितेन प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितेन संघात् षड्रात्रं मानाप्यं याचितम्। दत्तमस्य संघेनोदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासस्यान्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितस्य प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपाया मूलापकर्षपर्युषितस्य षड्रात्रं चीर्णमानाप्यम्। सोऽयमुदायी भिक्षुरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमास-

प्रतिच्छन्नायाः पर्युषितपरिवासः अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितः प्रत्यन्तरापत्तेरन्तरापत्ति-प्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितः षड्रात्रं चरितमा-नाप्यं संघादावर्हणं याचते। स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघः उदायिनं भिक्षुमस्याः संघाव-शेषायाः आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमास-प्रतिच्छन्नायाः पर्युषितपरिवासमन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितं प्रत्यन्तरापत्तेरन्तरापत्तिप्रति-रूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितं षड्रात्रं चरितमानाप्य-मावर्हेदिति। एषा ज्ञप्तिः।

ततः पश्चादवसादयितव्यः[1]। न साधूदायि[न्] कृतम्। न सुष्ठु कृतम्। कथमिदानीं त्वं तस्य भगवतस्तथागतस्यार्हतः सम्यक्संबुद्धस्यैवं [धर्मे][2] रागविरागाय चेतोविमुक्तः। प्रज्ञा-विमुक्ते धर्मे देश्यमाने द्वेषविरागाय मोहविरागाय चेतो-विमुक्तः। प्रज्ञाविमुक्ते धर्मे देश्यमाने इदमेवंरूपमप्रासादिक-मकार्षीः। वरं खलु ते मोहपुरुष आशीविषो घोरविषः कृष्ण-सर्पस्तीक्ष्णविषः उभाभ्यां पाणिभ्यां प्रतिगृहीतोऽभविष्यत न त्वेवमिदमेवंरूपमप्रासादिकं कृतम्।

द्वाविमौ धर्मोल्कां निर्वापयतो धर्मालोकं धर्माभां धर्मप्रभासं धर्मप्रदीपं धर्मप्रद्योतम्। कतमौ द्वौ। यश्चापत्तिमापद्यते। यश्चापत्ति-

1 268a, l. 6 འོག་ཏུ་ཟླ་དབབ་བར་བྱ་སྟེ།

2 263a, l. 7: སངས་རྒྱས་དེའི་ཆོས་ནི་འདི་ལྟར་འདོད་ཆགས

मापन्नो यथाधर्मं न प्रतिकरोति । द्वावघमूलं न खनतः प्रतिस्रोतो [न] व्यायच्छतो न सरितां लतां शोषयतो न मारं योधयतो न मारध्वजं पातयतो न धर्मध्वजमुच्छ्रापयतो न तथागतस्य धर्म्यं धर्मचक्रं प्रव[र्तय]तः [न] तमनुप्रवर्तयतः । कतमौ द्वौ । यश्चापत्तिमापद्यते । यश्चापत्तिमापन्नो यथाधर्मं न प्रतिकरोति ।

अनया त्वमुदायिन्नापत्त्या अदेशितया अप्रतिदेशितया अभव्योऽनित्यसंज्ञाया[1] अनित्ये दुःखसंज्ञाया दुःखे अनात्मसंज्ञाया आहारे अप्रतिरूपसंज्ञायाः सर्वलोके अनभिरतिसंज्ञाया आदीनवसंज्ञायाः प्रहाणसंज्ञाया विरागसंज्ञाया निरोधसंज्ञाया मरणसंज्ञाया विनीलकसंज्ञाया विपूयकसंज्ञाया व्याध्मातकसंज्ञाया विपडुमकसंज्ञाया विखादितकसंज्ञाया विलोहितकसंज्ञाया अस्थिसंज्ञाया विक्षिप्तकसंज्ञायाः शून्यताप्रत्यवेक्षणसंज्ञायाः । अभव्यः प्रथमस्य ध्यानस्य द्वितीयस्य तृतीयस्य ध्यानस्य चतुर्थस्य मैत्र्याः करुणाया मुदिताया उपेक्षाया आकाशानन्त्यायतनस्य विज्ञानानन्त्यायतनस्य आकिंचन्यायतनस्य नैवसंज्ञानासंज्ञायतनस्य स्रोतआपत्तिफलस्य सकृदागामिफलस्य अनागामिफलस्य ऋद्धिविषयस्य दिव्यस्य श्रोत्रस्य चेतःपर्यायस्य पूर्वनिवासस्य च्युत्युपपादस्यास्रवक्षयस्य । अनया ते उदायिन्नापत्त्या अदेशितया अप्रतिदेशितया द्वयोर्गत्योरन्यतरान्यतरा गतिः प्रतिकांक्षितव्या । नरका वा तिर्यञ्चो वा । उक्तं भगवता । द्वे प्रतिच्छन्नकर्मान्तस्य गती । नरका वा

1 269a, l. 6. འདུ་ཤེས་ཀྱི་སྣོད་དུ་མི་འགྱུར་ཞིང །=संज्ञाया भाजनम्

तिर्यञ्चो वा। ये मे भाषितं न श्रद्धास्यन्ति ते प्रतिच्छादयितव्यं मंस्यन्ते।

शृणोतु भदन्तः संघः। अयमुदायी भिक्षुः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः संघादर्धमासं परिवासो याचितः। दत्तोऽस्य संघेन उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासः। सोऽयं पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासो याचितः। दत्तोऽस्य संघेन उदायिनो भिक्षोरस्याः संघावशेषाया अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासः। सोऽयं मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तेनानेन उदायिना भिक्षुणास्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नायाः संघान्मूलापकर्षो याचितः। दत्तोऽस्य संघेन उदायिनो भिक्षोरस्याः संघावशेषायाः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षः। तेनानेन उदायिना भिक्षुणास्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासेन

अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितेन प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितेन संघात् षड्रात्रं मानाप्यं याचितम्। दत्तमस्य संघेन उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासस्यान्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितस्यान्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितस्य प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितस्य षड्रात्रं मानाप्यम्। सोऽयमुदायी भिक्षुरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासः अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितः षड्रात्रं चरितमानाप्यं संघादावर्हणं याचते। तत्संघः उदायिनं भिक्षुमस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासमन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितं प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नायां मूलापकर्षपर्युषितं षड्रात्रं चरितमानाप्यमावर्हति। येषामायुष्मतां क्षमन्ते उदायिनं भिक्षुमस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासमन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया [मूल-

परिवासपर्युषितं प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया] मूलापकर्षपर्युषितं षड्रात्रं चरितमानाप्यमावर्हितुं ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। इयं प्रथमा कर्मवाचना। [एवं] द्वितीया तृतीया कर्मवाचना कर्तव्या। आवर्हितः संघेन उदायी भिक्षुरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नायाः पर्युषितपरिवासः अन्तरापत्तेः पूर्वापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलपरिवासपर्युषितः प्रत्यन्तरापत्तेरन्तरापत्तिप्रतिरूपायाः प्रतिच्छन्नाया मूलापकर्षपर्युषितः षड्रात्रं चरितमानाप्यम्। क्षान्तमनुज्ञातं संघेन। यस्मात्तूष्णीमेवमेतद्धारयामि।

ततः पश्चादुत्साहयितव्यः। साधूदायिन् कृतम्। सुष्ठु कृतम्। द्वौ पण्डितौ द्वौ व्यक्तौ द्वौ सत्पुरुषौ। यश्चापत्तिं नापद्यते यश्चापत्तिमापन्नो यथाधर्मं प्रतिकरोति। द्वौ धर्मोल्कां प्रज्वालयतो धर्मालोकं धर्माभां धर्मप्रभां धर्मावभासं धर्मप्रदीपं धर्मप्रद्योतम्। कतमौ द्वौ। यश्चापत्तिं नापद्यते। यश्चापत्तिमापन्नो यथाधर्मं प्रतिकरोति।

द्वावघमूलं खनतः प्रतिस्रोतो व्यायच्छतः सरितां लतां शोषयतो मारं योधयतो मारध्वजं पातयतो धर्मध्वजमुच्छ्रापयतः पापीयसः स्रोतः [छेदयतः] तथागतस्य धर्म्यं धर्मचक्रं प्रव[र्तय]तोऽनुप्रवर्तयतः। कतमौ [द्वौ]। यश्चापत्तिं नापद्यते। यश्चापत्तिमापन्नो यथाधर्मं प्रतिकरोति।

अनया त्वमुदायिन्नापत्त्या देशितया भव्योऽनित्यसंज्ञाया अनित्ये दुःखसंज्ञाया दुःखे अनात्मसंज्ञाया आहारे अप्रतिकूल-

संज्ञायाः सर्वलोके अनभिरतिसंज्ञाया आदीनवसंज्ञाया प्रहाण-संज्ञाया विरागसंज्ञाया निरोधसंज्ञाया मरणसंज्ञाया अशुभ-संज्ञाया विनीलकसंज्ञाया विपूयकसंज्ञाया विपद्रुमुकसंज्ञाया व्याध्मातकसंज्ञाया विखादितकसंज्ञाया विलोहितकसंज्ञाया विक्षिप्तकसंज्ञाया अस्थिसंज्ञायाः शून्यताप्रत्यवेक्षणसंज्ञायाः। भव्यः प्रथमस्य ध्यानस्य द्वितीयस्य तृतीयस्य चतुर्थस्य मैत्र्याः करुणाया मुदिताया उपेक्षाया आकाशानन्त्यायतनस्य विज्ञानानन्त्यायतनस्य आकिंचन्यायतनस्य नैवसंज्ञानासंज्ञायतनस्य स्रोतआपत्तिफलस्य सकृदागामिफलस्य अनागामिफलस्य ऋद्धिविषयस्य दिव्यस्य श्रोत्रस्य चेतःपर्यायस्य पूर्वनिवासस्य च्युत्युपपादस्यास्रवक्षयस्य। अनया ते उदायिन्नापत्त्या देशितया प्रतिदेशितया द्वयोर्गत्योरन्य-तरान्यतरा गतिः प्रतिकांक्षितव्या। देवा वा मनुष्या वा।

उक्तं भगवता। द्वे अप्रतिच्छन्नकर्मान्तस्य गती। देवा [वा] मनुष्या वा। ये मे भाषितमभिश्रद्धास्यन्ति न ते प्रतिच्छादयि-तव्यं मन्यन्त इति। पुनश्चोक्तम्।

छन्नमेवाभिवर्षति विवृतं नाभिवर्षति।
तस्माच्छन्नं विवृणुयादेवं तं नाभिवर्षति॥

आवर्हितस्त्वमुदायिन् संघेन। अप्रमादेन संपादय।

॥ पाण्डुलोहितकवस्तु समाप्तम्॥

———

पिण्डोद्दानम् ।

**उदायी समुच्छ्रयः[1] पर्यन्तोऽथापरेण भवति पश्चिमम् ।**

उद्दानम् ।

**उदायी अन्येन स्मरन्ति लज्जित**
**इदानीं जानामि द्वय द्वय कृतम् ।**
**सुदत्त दुर्दत्त चतुष्कभाषितम्**
**स्मृतिप्रमोषेण चत्वारः प्रकाशिताः ॥**

बुद्धो भगवान् श्रावस्त्यां विहरति जेतवने अनाथपिण्डदस्यारामे। तेन खलु समयेन उदायी संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रतिच्छन्नाम्। [ए]तत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। ददत यूयं भिक्षवः उदायिनो भिक्षोरस्याः संघावशेषाया आपत्तेः संचिन्त्य शुक्रविसृष्टिसमुत्थिताया अर्धमासप्रतिच्छन्नाया अर्धमासं परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः अप्रतिच्छन्नाम्। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। ददत यूयं भिक्षवोऽस्य पुद्गलस्यास्याः संघावशेषाया आपत्तेरप्रतिच्छन्नायाः षड्रात्रं मानाप्यमिति। यो वा पुनरन्योऽप्येवंजातीयः।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः। स ते द्वे आपत्ती द्वौ मासौ न जानाति। द्वयोर्मासयोरत्ययाज् ज्ञात्वा द्वौ मासौ

1 Ms. समुचय ; Tib 272b, l. 4 བདུས་པ | See p 65.

प्रतिच्छाद्य एकां भिक्षूणामारोचयति[1]। [एकां नारोचयति। तस्य][2] संघेन द्वौ मासौ परिवासो दत्तः। स पारिवासिक एव सन् तामन्यापत्तिं[3] प्रतिजानाति या अनेन संघमध्ये नारोचिता। स एतत्प्रकरणं भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्यापत्तेस्तावेव द्वौ मासौ परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः। यथा प्रतिजानात्येवं स्मरति[2]।

अथापरः पुद्गलः संघावशेषे द्वे आपत्ती आपन्नः। स ते द्वे आपत्ती द्वौ मासौ न जानाति। द्वयोर्मासयोरत्ययाज् ज्ञात्वा द्वौ मासौ प्रतिच्छाद्य एकां भिक्षूणामारोचयति। एकां नारोचयति। तस्य संघे[न] द्वौ मासौ परिवासो दत्तः। स पारिवासिको लज्जी धर्ममवक्रान्तः। स एतत्प्रकरणं भिक्षूणामारोचयति। अहमस्म्यायुष्मन्तः संघावशेषे द्वे आपत्ती आपन्नः। सोऽहं ते द्वे आपत्ती द्वौ मासौ न जानामि। द्वयोर्मासयोरत्ययाज् ज्ञात्वा द्वौ मासौ प्रतिच्छाद्य एकां भिक्षूणामारोचयामि। तस्य मम संघेन द्वौ मासौ परिवासो दत्तः। सोऽहं पारिवासिको लज्जी धर्ममवक्रान्तः। तस्य तत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तस्या आपत्तेर्यथाप्रतिच्छन्नायाः परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः। यथा जानात्येवं स्मरति[4]।

1 Ms. भिक्षुणामागत्वारोचयति 2 See Tib. 273a, l 6.

3 Ms तामध्यापत्ति

4 This sentence means "put *smarati* instead of *jānāti*" in the preceding passage

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः। स त्वर्ध-मासं प्रातिमोक्षसूत्रोद्देश उद्दिश्यमाने एवमाह 'इदानीमह-मायुष्मन्तो जाने यथा[यं] धर्मः सूत्रगतः सूत्रपर्यापन्न' इति। तं चेद्भिक्षवो जानीरन् संनिषण्णः पूर्वोऽयमायुष्मान् द्वे त्रीणि वा पोषधकर्माणि कः पुनर्वादो भूय इति। तस्या-युष्मतो नैवाज्ञानान्मुक्तिः। स यां चापत्तिमापन्नस्तां च यथाधर्मं कारयितव्यः। उत्तरे च संवेजयितव्यः। यथा जानात्येवं स्मरति।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः। स त्वर्धमासं प्रातिमोक्षसूत्रोद्देश उद्दिश्यमाने एवमाह 'इदानीमहमायुष्मन्तो जाने यथायं धर्मः सूत्रगतः सूत्रपर्यापन्न' इति। तं चेद्भिक्षवो न जानीरन् संनिषण्णः पूर्वोऽयमायुष्मान् द्वे त्रीणि वा पोषधकर्माणि कः पुनर्वादो भूय इति। तस्यैवायुष्मतो नैवाज्ञानान्मुक्तिः। स [यां] चापत्तिमापन्नस्तां यथाधर्मं कारयितव्यः। यथा जानात्येवं स्मरति।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः। स तां मासं न जानाति। मासस्यात्ययाज् ज्ञात्वा मासं प्रतिच्छाद्य भिक्षूणा-मारोचयति। तस्य संघेन द्वौ मासौ परिवासो दत्तः। स पारि-वासिकः सन्नागतागतानां भिक्षूणामारोचयति। अहमस्म्या-युष्मन्तः संघावशेषामापत्तिमापन्नः। सोऽहं तामापत्तिमापन्नो जानामि मासस्यात्ययाज् ज्ञात्वा मासं प्रतिच्छाद्य भिक्षूणा-मारोचयामि। तस्य मम संघेन द्वौ मासौ परिवासो दत्तः।

मासममायुष्मन्तः सुदत्तो मासं दुर्दत्तः[1] । तत्कस्य हेतोः । अधर्मत्वात् कोप्यत्वात्कर्मणः[2] । यथा जानात्येवं स्मरति[3] ।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः । स तामापत्तिं मासं न जानाति । मासस्यात्ययाज् ज्ञात्वा अप्रतिच्छाद्य भिक्षूणामारोचयति । तस्य संघेन मासं परिवासो दत्तः । स आगतागतानां भिक्षूणामारोचयति । अहमस्म्यायुष्मन्तः संघावशेषामापत्तिमापन्नः । सोऽहं तामापत्तिं मासं न जानामि । मासस्यात्ययाज् ज्ञात्वा अप्रतिच्छाद्य भिक्षूणामारोचयामि । तस्य मम संघेन मासं परिवासो दत्तः। दुर्दत्तः आयुष्मन्न सुदत्तः । तत्कस्य हेतोः । मानाप्यार्हे[4] आयुष्मन् । यथा जानात्येवं स्मरति[5] ।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नां देशयिष्यामीति न स्मरति । स तामापत्तिं स्मृत्वाप्रतिच्छाद्य भिक्षूणामारोचयति । भिक्षवो भगवतः । भगवानाह । ददत यूयं भिक्षवस्तस्य पुद्गलस्य तस्या आपत्तेरुभयसंततेः[6] परिवासं पूर्विकायाः पश्चिमकाया इति । यो वा पुनरन्योऽप्येवंजातीयः ।

1 Cf. *Cullavagga*, p 55

2 Tib 274b, l 5 ཆོས་མ་ཡིན་པའི་ལས་འཁྲགས་པ་ཡིན་ཏེ །

3 Tib marks here འདུལ་བ་བཞི །

4 Tib. 275a, l. 3 མགུ་བར་བྱ་བར་འོས་པ་སྟེ །

5 See p. 62, fn 4.

6 *Ibid*. l 6: རྒྱུད་གཉིས་ནས །

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नां देशयिष्यामीति न स्मरति। स तां स्मृत्वा अप्रतिच्छाद्य भिक्षूणामारोचयति। भिक्षवो भगवत आरोचयन्ति। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तस्या आपत्तेः पूर्विकायाः संततेः परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्न[स्ताम]प्रतिच्छन्नां देशयिष्यामीति न स्मरति। स तां स्मृत्वा प्रतिच्छाद्य भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य [तस्या आ]पत्तेः पश्चिमकार्याः परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नस्तामप्रतिच्छन्ना देशयिष्यामीति न स्मरति। स तां स्मृत्वा अप्रतिच्छाद्यैव भिक्षूणामारोचयति।. भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तस्या आपत्तेः षड्रात्रं मानाप्यमिति। यो वा पुनरन्योऽप्येवंजातीयः।

उद्दानम्।

**समुच्छ्रयेण[1] षोडश द्वे[2] पञ्च अष्टविंशके[3]।**

1 Ms. समुच्चय, see above, p. 61

2 Ms. दीर्घिका ; lib 275b, l. 6 བཅུ་དྲུག་གཉིས་དང་།

3 *Ibid.* ལྔ་དང་བརྒྱད་དང་ཉི་ཤུ་དང་།

त्रिभिस्त्रिभिरष्टकाभिस्तिसृभिश्चतु[श्चतुर] अष्टकाः[1] ।
उत्क्षिप्ता अष्टकास्तिस्रो मुखाः पञ्च समुद्दिताः[2] ॥

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नां विभ्रान्तः। स आगत्य पुनरुपसंपन्नः। स तामापत्तिं प्रतिच्छाद्यैव भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तस्या आपत्तेः [3][उभय]संततेः परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नां विभ्रान्तः। स आगत्य पुनरुपसंपन्नः। स तामापत्तिमप्रतिच्छाद्य भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तस्या आपत्तेः पूर्विकायाः संततेः परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः।

[ अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः अप्रतिच्छन्नां विभ्रान्तः। स आगत्य पुनरुपसंपन्नः। स तामापत्तिं प्रतिच्छाद्य भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तस्या आपत्तेः पश्चिमिकायाः सन्ततेः परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः। ]

1 Ms षष्टिका; *Ibid* གསུམ་དང་གསུམ་བརྒྱད་གསུམ་དང་ནི །
བཞི་དང་བཞི་ཚན་བརྒྱད་ངག་དང །

2 Ms समुद्यतः; *Ibid.* གནས་ནས་དབྱུང་བརྒྱད་གསུམ་དང་ནི །
སྒོ་ལྔ་དག་ནི་སྟོན་པ་ཡིན །

3 Tib 276a, l. 2 གཉིས་པའི་རྒྱུད་ནས་བཟུང་སྟེ །

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः अप्रतिच्छन्नां विभ्रान्तः। स आगत्य पुनरुपसंपन्नः। स तामापत्तिमप्रतिच्छाद्यैव भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तस्या आपत्तेः षड्रात्रं मानाप्यमिति। यो वा पुनरन्योऽप्येवंजातीयः।

यथा शुद्धकेन चत्वारि[1] एवं जानतश्चत्वारि। स्मरतश्चत्वारि। वैमतिकेन चत्वारि। अनेनाकारेण अपरापि चतुष्किका। किन्तु पेयालविशेषः।

अथापरः [पुद्गलः] एवं पारिवासिक एव वक्तव्यः। यथा पारिवासिकः एवं पर्युषितपरिवासो मानाप्यचारिकश्चरितमानाप्यः शिक्षादत्तकश्चतुष्किकायां योजयितव्याः। यथा विभ्रान्तः एवं श्रमणोद्देशकत्वं प्रतिजानाति। उन्मत्तकत्वं विक्षिप्तचित्तकत्वं [2]वेदनाभिन्नकत्वमदर्शनायोत्क्षेपकत्वमप्रतिकर्मायोत्क्षेपकत्वम[3]-प्रतिनिसृष्टे च पापके दृष्टिगते उत्क्षेपकत्वमिति विस्तरेण योजयितव्यम्।

अथापरः पुद्गलो द्वे संघावशेषे आपत्ती आपन्नः प्रतिच्छन्नां चाप्रतिच्छन्नां च विभ्रान्तः। स आगत्य पुनरुपसंपन्नः। स यां प्रतिच्छाद्य विभ्रान्तस्तां प्रतिच्छाद्यैव भिक्षूणामारोचयति। यामप्रतिच्छाद्य [तां प्रतिच्छाद्य] भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्योभयसंततेः परिवासम्। एकस्याः पूर्विकाया द्वितीयस्याः पश्चिमकाया इति। यो वा पुनरन्योऽप्येवंजातीयः।

1 Tib 276b, 1 2-3 ཇི་ལྟར་ཁྲུད་པར་མེད་པས་བཞི་ཡིན་པས།

2 Ms. वेदनाभिलन्नकत्व० ; see Mvyut 280 45, Tib 276b, 1 6.

ཚོར་བས་ཉེན་པ་ཉིད་དང་།

3 *Ibid.* ཕྱིར་མི་བྱེད་པས།

अथापरः पुद्गलः संघावशेषे द्वे आपत्ती आपन्नः प्रतिच्छन्नां चाप्रतिच्छन्नां च विभ्रान्तः। स आगत्य पुनरुपसंपन्नः। स यां प्रतिच्छाद्य विभ्रान्तस्तामप्रतिच्छाद्यैव भिक्षूणामारोचयति। यामप्रतिच्छाद्य तामप्रतिच्छाद्यैव भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्यैकस्या आपत्तेः पूर्विकायाः सन्ततेः परिवासम्। एकस्याः पश्चिमिकायाः षड्रात्रं मानाप्यमिति। यो वा पुनरन्योऽप्येवंजातीयः।

अथापरः पुद्गलः संघावशेषे द्वे आपत्ती आपन्नः प्रतिच्छन्नां चाप्रतिच्छन्नां च विभ्रान्तः। स आगत्य पुनरुपसंपन्नः। स यां प्रतिच्छाद्य विभ्रान्तस्तामप्रतिच्छाद्य भिक्षूणामारोचयति। यां त्वप्रतिच्छाद्य तां प्रतिच्छाद्य भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्यैकस्या आपत्तेः पूर्विकायाः संततेः परिवासम्। एकस्याः पश्चिमिकायाः [परिवास[1]]-मिति। यो वा पुनरन्योऽप्येवंजातीयः।

अथापरः पुद्गलः [संघावशेषे द्वे आपत्ती आपन्नः][2] प्रतिच्छन्नां चाप्रतिच्छन्नां च विभ्रान्तः। स आगत्य पुनरुपसंपन्नः। स यां प्रतिच्छाद्य विभ्रान्तस्तामप्रतिच्छाद्य भिक्षूणामारोचयति। यां त्वप्रतिच्छाद्य तामप्रतिच्छाद्यैव भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्यैकस्या

1 Ms पश्चिमिकायाः षड्रात्रं मानाप्यं but see Tib 277b, ll. 3-4

2 Ms. संघावशेषामापत्तिमापन्न.। यो वा पुनरन्योऽप्येवंजातीयः।

आपत्तेः पूर्विकायाः संततेः परिवासम्। एकस्याः पश्चिमिकायाः षड्रात्रं मानाप्यमिति। यो वा पुनरन्योऽप्येवंजातीयः।

अथापरः पुद्गलः एवं पारिवासिकः पर्युषितपरिवासो मानाप्यचारिकश्चरितमानाप्यः शिक्षादत्तकश्च वक्तव्यः। यथा विभ्रान्तः एवं श्रमणोद्देशकत्वं प्रतिजानाति। उन्मत्तकत्वं प्रतिजानाति। विक्षिप्तचित्तकत्वं [1]वेदनाभिन्नकत्वमदर्शनायोत्क्षिप्तकत्वमप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षिप्तकत्वमिति विस्तरेण वाच्यम्।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः। परिमाणवतीः[2] प्रतिच्छन्नाः। स संघेनादर्शनायोत्क्षिप्तः। ओसारितः स ता आपत्तीः प्रतिच्छाद्य भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तासामापत्तीनां परिमाणवत्य इति कृत्वा उभयसंततेः परिवासं पूर्विकायाः पश्चिमकायाश्चेति। यो वा पुनरन्योऽप्येवंजातीयः।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः। परिमाणवतीः प्रतिच्छन्नाः। स संघेनादर्शनायोत्क्षिप्तः। ओसारितः स ता आपत्तीरप्रतिच्छाद्य भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तासामापत्तीनां परिमाणवत्य इति कृत्वा पूर्विकायाः संततेः परिवासमिति[3]। यो वा पुनरन्योऽप्येवंजातीयः।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः। परिमाणवतीरप्रतिच्छन्नाः। स संघेनादर्शनायोत्क्षिप्तः। ओसारितः स ता आपत्तीः

1 See above, p. 67, fn 2    2 Tib. 278a, l. 7 ཚད་དང་ལྡན་པ།

3 Ms. परिवासोऽयमिति

प्रतिच्छाद्य भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह ददत यूयं भिक्षवस्तस्य पुद्गलस्य तासामापत्तीनां परिमाणवत्य इति कृत्वा पश्चिमिकायाः सन्तत्तेः परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः[1]।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः। परिमाणवतीरप्रतिच्छन्नाः। स संघेनादर्शनायोत्क्षिप्तः। ओसारितः स ता आपत्तीरप्रतिच्छाद्य भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तासामापत्तीनां परिमाणवत्य इति कृत्वा षड्रात्रं मानाप्यमिति। यो वा पुनरन्योऽप्येवं जातीयः।

यथा परिमाणवतीरेवमपरिमाणवतीः। यथा अदर्शनायोत्क्षिप्तकेनाष्टावेवमप्रतिकर्मायोत्क्षिप्तकेनाष्टावेवमप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षिप्तकेनाष्टौ।

पारिवासिकः पुद्गलः संघावशेषामापत्तिमापन्नो विभ्रान्तः। स आगत्य पुनरुपसंपन्नः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। अपर्युषितपरिवासं [परिवस]तु। पर्युषितपरिवासो भविष्यतीति।

यथा विभ्रान्त एवं श्रमणोद्देशकत्वं प्रतिजानाति। उन्मत्तकत्वं [वि]क्षिप्तचित्तकत्वं वेदनाभिन्नकत्वमदर्शनायोत्क्षिप्तकत्वमप्रतिकर्मायोत्क्षिप्तकत्वम्।

पर्युषितपरिवासः पुद्गलः संघावशेषामापत्तिमापन्नो विभ्रान्तः। स आगत्य पुनरुपसंपन्नः। एतत्प्रकरणं भिक्षवो भगवत आरो-

1 Ms. adds here अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः परिमाणवतीः प्रतिच्छन्नाः। स संघेनादर्शनायोत्क्षिप्य ओसारितः। स ता आपत्तीः प्रतिच्छाद्य भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तासामापत्तीनां

चयन्ति। भगवानाह। पर्युषितपरिवास एवासौ भिक्षवः पुद्गलः। ददतास्य मानाप्यमिति।

यथा विभ्रान्तः[एवं श्रमणोद्देश]कत्वं प्रतिजानाति। पूर्ववदेव पेयालो यावद्-प्रतिनिसृष्टे पापके दृष्टिगते उत्क्षिप्तकत्वम्।

मानाप्यचारिकः पुद्गलः संघावशेषामापत्तिमापन्नो विभ्रान्तः। स आगत्य पुनरुपसंपन्नः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। अचरितं चरतु। चरितमानाप्यो भविष्यतीति। यथा विभ्रान्तः पूर्ववत्। एष एव पेयालः।

चरितमानाप्यः पुद्गलः संघावशेषामापत्तिमापन्नो विभ्रान्तः। स आगत्य पुनरुपसंपन्नः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। चरितमानाप्य एवासौ भिक्षवः। आवर्हतैनमिति। यथा विभ्रान्तः पूर्ववत्। एष एव पेयालः।

अदर्शनायोत्क्षिप्तकः पुद्गलः संघावशेषामापत्तिमापन्नः अप्रतिच्छन्नाम्। [स] संघेनादर्शनायोत्क्षिप्तः। ओसारितः स तामापत्तिं [प्रतिच्छाद्य[1]] भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तस्या आपत्तेः पश्चिमकायाः संततेः परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः।

अदर्शनायोत्क्षिप्तकः पुद्गलः संघावशेषामापत्तिमापन्नः अप्रतिच्छन्नाम्। स संघेनादर्शनायोत्क्षिप्तः। ओसारितः स तामापत्तिमप्रतिच्छाद्य भिक्षूणामारोचयति। भिक्षवो भगवतः। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य षड्रात्रं मानाप्यमिति। यो वा पुनरन्योऽप्येवंजातीयः।

1 See Tib. 280a, l 1

यथा शुद्धकेन द्वे एवं जानतो द्वे स्मरतो द्वे वैमतिकेन द्वे। यथादर्शनायोत्क्षिप्तकेनाष्टौ एवमप्रतिकर्मायोत्क्षिप्तकेनाष्टौ अप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षिप्तकेनाष्टौ।

उद्दानम्।

पर्यन्तेन द्वादशिका नविकाः सार्वकालिकाः[1]।
यामिकां नविकां कृत्वा पदानि दश पंच च[2]॥

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः। अपरिमाणवतीः प्रतिच्छन्नाः। स तासामापत्तीनामापत्तिपर्यन्तं जानाति नो तु रात्रिपर्यन्तम्[3]। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तासामापत्तीनामपरिमाणवत्य इति कृत्वा शुद्धान्तिकं परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः। अपरिमाणवतीः प्रतिच्छन्नाः। स तासामापत्तीनां रात्रिपर्यन्तं जानाति नो त्वापत्तिपर्यन्तम्। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तासामापत्तीनाम-

1 Tib 280b, l 1 བཅས་པ་གཅིག་ཉིས་དག་དང་ནི། །
དགུ་པ་ཐམས་ཅད་ནག་པ་དང་། །

2 Ibid ཐུག་དགུ་དག་ཏུ་བྱས་པ་དང་། །
ཚིག་བཅུ་དང་ནི་ལྔ་པའོ། །

3 Cf. *Cullavagga*, III. 26 S B E XVII, p 416 *āpattiparyantam*="degree of offences" and *rātriparyantam*="duration of offences."

परिमाणवत्य इति कृत्वा यथा प्रतिच्छन्नानां परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः। [अ]परिमाणवतीः प्रतिच्छन्नाः। स तासां नैवापत्तिपर्यन्तं जानाति न रात्रिपर्यन्तमिति[1]। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तासामापत्तीनामपरिमाणवत्य इति कृत्वा शुद्धान्तिकं[2] परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः। अपरिमाणवतीः प्रतिच्छन्नाः। स तासामापत्तिपर्यन्तं जानाति रात्रिपर्यन्तमिति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। ददत यूयं भिक्षवस्तस्य पुद्गलस्य तासामापत्तीनामपरिमाणवत्य इति कृत्वा यथा प्रतिच्छन्ना[नां] परिवासमिति। यो वा पुनरन्योऽप्येवंजातीयः। यथा जानतश्चत्वारि एवं स्मरतश्चत्वारि वैमतिकश्चत्वारि।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नाम्। तस्य संघेन परिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण[3]। स

1 Tib. 280b, l. 7 ལྟུང་བ་དེ་རྣམས་ཀྱི་བརྩམས་པ་ཡང་མི་ཤེས་པ། ཞག་གི་མཐའ་ཡང་མི་ཤེས་པ། See p 72 fn. 3.

2 Tib. 281a, l. 2 དག་པའི་མཐའ་ཅན།

3 Cf Cullavagga, iii. 35 dhammikena kammena akuppena atṭhānārahena and iii. 36: adhammiken'eva kammena kuppena ṭhānārahena

Tib. 281a. l. 7 ཆོས་མ་ཡིན་པའི་ལས་འཁྲུགས་པ་གཞག་པར་འོས་པས།

पारिवासिक एव [सन्] संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलपरिवासो दत्तः[1] अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। स मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलापकर्षो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। मानाप्यमप्यधर्मेण। [3]आव्रीढोऽप्यधर्मेण। अयमुच्यते सर्वकालकः[2] पुद्गलः अशुद्धः अव्युत्थितस्तस्या आपत्तेर्न परिमुच्यते।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नाम्। तस्य संघेन परिवासो दत्तः धर्मेण कर्मणाकोप्येनास्थापनार्हेण। स पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छनाम्। तस्य संघेन मूलपरिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। स मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलापकर्षो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। मानाप्यमप्यधर्मेण। [3]आव्रीढोऽप्य-

1 Ms दत्त इति 2 Tib. 281b, l. 3. ཉག་ པོ ། Ms. कालिकः

3 Tib. 281b, l. 3 ཕྱུང་ བ ། = དབྱུང་བ=आवर्हणा (Cf Mvyut 264. 18)= expel, banish, withdraw Cf Mvyut 265 948· आव्रीढशल्यम्। From the Tib. rendering of the word, we find that Pāli *abbhāna*(=Sans. *āvarhaṇa*) means "not rehabilitation" or "coming back" as is usually rendered in English but "withdrawal of offences" committed by the monk. The monk was already within the Sangha; he was only debarred from certain privileges. By "abbhāna or āvarhana," his offences are excused (lit. banished) by the Sangha and his privileges are restored.

धर्मेण । अयमुच्यते यद्भूयस्कालकः पुद्गलः अशुद्धः अव्युत्थित-स्तस्या आपत्तेर्न परिमुच्यते ।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः प्रति-च्छन्नाम् । तस्य संघेन परिवासो दत्तः धर्मेण कर्मणाकोप्येना-स्थापनार्हेण । [स] पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम् । तस्य संघेन मूलपरि-वासो दत्तः धर्मेण कर्मणाकोप्येनास्थापनार्हेण । [स] मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रति-रूपां प्रतिच्छनाम् । तस्य संघेन मूलापकर्षो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण । मानाप्यमप्यधर्मेण । आव्रीढोऽप्यधर्मेण । अयमुच्यते उपार्धकालकः पुद्गलः अशुद्धः अव्युत्थित[स्त]स्या [आपत्तेर्न परि]मुच्यते ।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नाम् । तस्य संघेन परिवासो दत्तः धर्मेण कर्मणाकोप्येनास्थापनार्हेण । स पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम् । तस्य संघेन मूलपरिवासो दत्तः धर्मेण कर्मणाकोप्येनास्थापनार्हेण । स मूलपारिवासिक एव संन् संघावशेषा[मापत्ति]मापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रति-च्छन्नाम् । तस्य संघेन मूलापकर्षो दत्तः धर्मेण कर्मणाकोप्येना-स्थापनार्हेण । मानाप्य[मप्य]धर्मेण । आव्रीढोऽप्यधर्मेण । अय-मुच्यते एकदेशकालकः पुद्गलः अशुद्धोऽव्युत्थितस्तस्या [आ]पत्तेर्न परिमुच्यते ।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नाम्। तस्य संघेन परिवासो दत्तः धर्मेण कर्मणाकोप्येनास्थापनार्हेण। स पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलापकर्षो दत्तः धर्मेण [कर्मणा]कोप्येनास्थापनार्हेण। स मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलापकर्षो दत्तः धर्मेण कर्मणाकोप्येनास्थापनार्हेण। मानाप्यमपि[1] धर्मेण। आव्रीढस्त्वधर्मेण। अयमुच्यते प्रदेशकालकः पुद्गलः अशुद्धोऽव्युत्थितस्तस्या [आ]पत्तेर्न परिमुच्यते।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नाम्। तस्य संघेन परिवासो दत्तः धर्मेण कर्मणाकोप्येनास्थापनार्हेण। स पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलपरिवासो दत्तः धर्मेण कर्मणाकोप्येनास्थापनार्हेण। स मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलापकर्षो दत्तः धर्मेण कर्मणाकोप्येनास्थापनार्हेण। मानाप्यमपि धर्मेण। आव्रीढोऽपि धर्मेण। अयमुच्यते अपगतकाल[क]ः पुद्गलः शुद्धो व्युत्थितस्तस्या [आ]पत्तेः परिमुच्यते।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः अप्रतिच्छन्नाम्। तस्य संघेन मानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण।

1 Ms. repeats here धर्मेण कर्मणाकोप्येनास्थापनार्हेण मानाप्यमपि

स मानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलमानाप्यं दत्त-मधर्मेण कर्मणा [कोप्येन] स्थापनार्हेण। स मूलमानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्ति मन्तरापत्तिप्रति-रूपां प्रतिच्छन्नाम्। तस्य संघेन मूलापकर्षमानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। आव्रीढोऽप्यधर्मेण। अयमुच्यते सर्व-कालकः[1] पुद्गलः अशुद्धः अव्युत्थितस्तस्या [आ]पत्तेर्न परिमुच्यते।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः अप्रतिच्छन्नाम्। तस्य संघेन मानाप्यं दत्तं धर्मेण कर्मणाकोप्येनास्थापनार्हेण। स मानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरा-पत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूल-मानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। स मूल-मानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरा-पत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलापकर्ष-मानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। आव्रीढोऽप्य[2]-धर्मेण। अयमुच्यते यद्भूयस्कालकः[1] पुद्गलः अशुद्धः अव्युत्थित-स्तस्या [आ]पत्तेर्न परिमुच्यते।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः अप्रतिच्छन्नाम्। तस्य संघेन मानाप्यं दत्तं धर्मेण कर्मणाकोप्येनास्थापनार्हेण। स मानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलमानाप्यं

1 Ms. ०कालिकः 2 Ms आव्रीढकोऽप्य०

दत्तं धर्मेण कर्मणाकोप्येनास्थापनार्हेण। स मूलमानाप्यचारिक[1] एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरा[पत्तिमन्तरा]पत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन[मूलापकर्षमानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थाप]नार्हेण। आव्रीढोऽप्यधर्मेण। अयमुच्यते उपार्धकालकः[2] पुद्गलः अशुद्धः अव्युत्थितस्तस्या [आ]पत्तेर्न परिमुच्यते।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः अप्रतिच्छन्नाम्। तस्य संघेन मानाप्यं दत्तं धर्मेण कर्मणाकोप्येनास्थापनार्हेण। स मानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलमानाप्यं दत्तं धर्मेण कर्मणाकोप्येनास्थापनार्हेण। [स] मूलमानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलापकर्षमानाप्यं दत्तं धर्मेण कर्मणाकोप्येनास्थापनार्हेण। आव्रीढस्त्वधर्मेण। अयमुच्यते एकदेशकालकः पुद्गलः अशुद्धः अव्युत्थितस्तस्या [आ]पत्तेर्न परिमुच्यते।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः [अ]प्रतिच्छन्नाम्। तस्य संघेन मानाप्यं दत्तं धर्मेण कर्मणाकोप्येनास्थापनार्हेण। स मानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलमानाप्यं दत्तं धर्मेण कर्मणाकोप्येनास्थापनार्हेण। स मूलमानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम्। तस्य संघेन मूलापकर्षमानाप्यं दत्तं धर्मेण कर्मणा-

1 Ms. मूलपारिवासिक

2 Ms. ०कालिकः

कोप्येनास्थापनार्हेण । आव्रीढोऽपि धर्मेण । अयमुच्यते अपगत-कालकः पुद्गलः शुद्धो व्युत्थितस्तस्या [आ]पत्तेः परिमुच्यते ।

द्वौ पुद्गलौ संघावशेषामापत्तिमापन्नौ देशयिष्यावो देशयिष्याव इति । तत्रैको देशयति द्वितीयो न देशयति । तत्र योऽसौ न देशयति तं संबहुला विनयातिसारिणीर्दुष्ठुला[1] आपत्तीर्देशयित्वा पश्चात्परिवासो देयः मूलपरिवासो मानाप्यम् । आवर्हितव्यश्च ।

द्वौ पुद्गलौ संघावशेषामापत्तिमापन्नौ । तावस्मिन्नेवावासे पुद्गलस्यान्तिके देशयिष्यावो देशयिष्याव इति । तत्रैको देशयति द्वितीयो न देशयति । तत्र योऽसौ न देशयति तं संबहुला विनयातिसारिणीर्दुष्ठुला आपत्तीर्देशयित्वा पश्चात्परिवासो देयः मूलपरिवासो मानाप्यम् । आवर्हितव्यश्च । यथा पुद्गलस्यान्तिके एवं द्वाभ्यां संबहुलानां संघस्य । यथास्मिन्नावासे एवमन्यस्मिन्नावासे ।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नाम् । तस्य संघेन परिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण । [1] स पारिवासिक एव सन्नन्यापत्तिं जानाति यानेन संघमध्ये नारोचिता । स तामापत्तिं जानाति । तामप्यापत्तिं जानाति यानेन संघमध्ये नारोचिता । स भिक्षूणामारोचयति । अहमस्म्यायुष्मन्तः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नाम् । तस्य मम संघेन परिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण । सोऽहं पारिवासिक एव सन्नन्यापत्तिं

1 Cf. Pāli : duṭṭhullā

जानामि या मे संघमध्ये नारोचिता। सोऽहं तामापत्तिं न जानामि यस्या मम संघेन परिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। साधु मे आयुष्मन्तस्तस्याः पूर्विकाया आपत्तेरपि परिवासं ददतु धर्मेण कर्मणाकोप्येनास्थापनार्हेण। अस्याश्च पश्चिमिकायाः। तस्यास्ते भिक्षवः पूर्विकाया आपत्तेः परिवासं ददति धर्मेण कर्मणाकोप्येनास्थापनार्हेण। तस्यास्तु पश्चिमिकायाः परिवासं ददति अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। [2] स पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। स तामन्तरापत्तिं जानाति। तामप्यापत्तिं जानाति यस्या अस्य संघेन परिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। स भिक्षूणामारोचयति। अहमस्म्यायुष्मन्तः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नाम्। तस्य मम संघेन परिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। सोऽहं पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। सोऽहं तामन्तरापत्तिं जानामि यस्या मम संघेन परिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। साधु मे आयुष्मन्तस्तस्याः पूर्विकाया आपत्तेर्मूलपरिवासं ददतु धर्मेण कर्मणाकोप्येनास्थापनार्हेण। तस्याश्चान्तरापत्तेर्मूलपरिवासमिति। तस्यास्ते भिक्षवः पूर्विकाया आपत्तेः परिवासं ददति धर्मेण कर्मणाकोप्येनास्थापनार्हेण। तस्यास्त्वन्तरापत्तेर्मूलपरिवासमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। [3] स मूलपारिवासिक एव सन् संघावशेषामा-

पत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम् । स तां प्रत्यन्तरापत्तिं जानाति । तामप्यन्तरापत्तिं जानाति यस्या अस्य संघेन मूलपरिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण । स भिक्षूणामारोचयति । अहमस्म्यायुष्मन्तः संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम् । तस्य मम संघेन मूलपरिवासो दत्तः धर्मेण कर्मणाकोप्येनास्थापनार्हेण । सोऽहं मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम् । सोऽहं तां प्रत्यन्तरापत्तिं जानामि । तामप्य-[न्तरा]पत्तिं जानामि[1] यस्या मम संघेन मूलपरिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण । साधु मे आयुष्मन्तस्तस्या अन्तरापत्तेर्मूलपरिवासं ददतु धर्मेण कर्मणाकोप्येनास्थापनार्हेण । अस्याश्च प्रत्यन्तरापत्तेर्मूलापकर्षमिति । तस्यास्ते भिक्षवः पूर्विकाया आपत्तेर्मूलपरिवासं ददति । तस्यास्तु प्रत्यन्तरापत्तेर्मूलापकर्षं धर्मेण [कर्मणा]कोप्येनास्थापनार्हेण ।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः अप्रतिच्छन्नाम्[2] । तस्य संघेन मानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण । [4] स मानाप्यचारिक एव [सन्] संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपामप्रतिच्छन्नाम्[2] । स तामन्तरापत्तिं जानाति यस्या अस्य संघेन मानाप्यं दत्तमधर्मेण कर्मणा

1 Ms. adds here पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम् ।

2 Tib. 285 b. l. 3 omits the word अप्रतिच्छन्नाम् ।

कोप्येन स्थापनार्हेण। स भिक्षूणामारोचयति। अहमस्म्यायुष्मन्तः संघावशेषामापत्तिमापन्नः अप्रतिच्छन्नाम्। तस्य मम संघेन मानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। सोऽहं मानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपामप्रतिच्छन्नाम्। सोऽहं तामन्तरापत्तिं जानामि यस्या मम संघेन मानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। साधु मे आयुष्मन्तस्तस्याः पूर्विकाया आपत्तेर्मानाप्यं ददतु धर्मेण कर्मणाकोप्येनास्थापनार्हेण। अस्याश्चान्तरापत्तेर्मूलमानाप्यमिति। तस्यास्ते भिक्षवः पूर्विकाया आपत्तेर्मानाप्यं ददति धर्मेण कर्मणाकोप्येनास्थापनार्हेण। अस्यास्त्वन्तरापत्तेर्मूलमानाप्यमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। [5] स मूलमानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपामप्रतिच्छन्नाम्। स तां प्रत्यन्तरापत्तिं जानाति। तामप्यन्तरापत्तिं जानाति यस्या अस्य संघेन मूलमानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। स भिक्षूणामारोचयति। अहमस्म्यायुष्मन्तः संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपामप्रतिच्छन्नाम्। तस्य मम संघेन मूलमानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। सोऽहं मूलमानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपामप्रतिच्छन्नाम्। सोऽहं तां प्रत्यन्तरापत्तिं जानामि। तामप्यन्तरापत्तिं जानामि यस्या मम संघेन मूलमानाप्यं दत्तामधर्मेण कर्मणा कोप्येन स्थापनार्हेण। साध साधु मे

आयुष्मन्तस्तस्याः पूर्विकाया अन्तरापत्तेर्मूलमानाप्यं ददतु धर्मेण कर्मणाकोप्येनास्थापनार्हेण। अस्याश्च प्रत्यन्तरापत्तेर्मूलापकर्षमानाप्यमिति। तस्यास्ते भिक्षवः पूर्विकाया अन्तरापत्तेर्मूल मानाप्यं ददति धर्मेण कर्मणाकोप्येनास्थापनार्हेण। अस्याश्च प्रत्यन्तरापत्तेर्मूलापकर्षमानाप्यम्। यथा जानता पञ्च एवं संस्मरता पञ्च वैमतिकेन पञ्च।

उद्दानम्।

अथापरेण द्वादशिका, वस्तु शोधयित्वा च षट्किकाः।
महाभूमिं शोधयित्वा पुद्गलवस्तु समुद्यतम्[1]॥

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नाम्। तस्य संघेन परिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। [1] स पारिवासिक एव संन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। स तामन्तरापत्तिं जानाति। तामप्यापत्तिं जानाति यस्या अस्य संघेन परिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। स भिक्षूणामारोचयति। अहमस्म्यायुष्मन्तः संघावशेषामापत्तिमापन्नः प्रतिच्छन्नाम्। तस्य मम संघेन परिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। सोऽहं पारिवासिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम्। सोऽहं तामन्तरापत्तिं जानामि। तामप्यापत्तिं जानामि यस्या मम संघेन परिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। साधु मे आयुष्मन्तस्तस्याः पूर्विकाया आपत्तेः परिवासं ददतु धर्मेण कर्मणाकोप्येनास्थापनार्हेण।

1 Tib. 287b. I. 4-5

तस्याश्चान्तरापत्तेर्मूलपरिवासमिति । तस्य ते भिक्षवस्तस्याः पूर्विकाया आपत्तेः परिवासं ददति धर्मेण कर्मणाकोप्येनास्थापनार्हेण। अस्यास्त्वन्तरापत्तेर्मूलपरिवासमधर्मेण कर्मणा कोप्येन स्थापनार्हेण । [2] स मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपां प्रतिच्छन्नाम् । स तां प्रत्यन्तरापत्तिं जानाति । तामप्यन्तरापत्तिं जानाति यस्या अस्य संघेन मूलपरिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण । स भिक्षूणामारोचयति । अहमस्म्यायुष्मन्तः संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम् । तस्य मम संघेन मूलपरिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण । सोऽहं मूलपारिवासिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिं पूर्वापत्तिप्रतिरूपां प्रतिच्छन्नाम् । सोऽहं तां प्रत्यन्तरापत्तिं जानामि । तामप्यन्तरापत्तिं जानामि यस्या मम संघेन मूलपरिवासो दत्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेण। साधु मे आयुष्मन्तस्तस्याः पूर्विकाया अन्तरापत्तेर्मूलपरिवासं ददतु धर्मेण कर्मणाकोप्येनास्थापनार्हेण । अस्याश्च प्रत्यन्तरापत्तेर्मूलापकर्षमिति । तस्य ते भिक्षवः पूर्विकाया अन्तरापत्तेर्मूलपरिवासं ददति धर्मेण कर्मणाकोप्येनास्थापनार्हेण । तस्यास्तु प्रत्यन्तरापत्तेर्मूलापकर्षं धर्मे[ण कर्म]णाकोप्येनास्थापनार्हेण ।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः अप्रतिच्छन्नाम् । तस्य संघेन मानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण । [3] स मानाप्यचारिक एव सन् संघावशेषामापत्ति-

मापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपामप्रतिच्छन्नाम्। स तामन्तरापत्तिं जानाति। तामप्यापत्तिं जानाति यस्या अस्य संघेन मानाप्यं दत्तामधर्मेण कर्मणा कोप्येन स्थापनार्हेण। स भिक्षूणामारोचयति। अहमस्म्यायुष्मन्तः संघावशेषामापत्तिमापन्नः अप्रतिच्छन्नाम्। तस्य मम संघेन षड्रात्रं मानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। सोऽहं मानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपामप्रतिच्छन्नाम्। सोऽहं तामन्तरापत्तिं जानामि। तामप्यापत्तिं जानामि यस्या मम संघेन मानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। साधु मे आयुष्मन्तस्तस्याः पूर्विकाया आपत्तेर्मानाप्यं ददतु धर्मेण कर्मणाकोप्येनास्थापनार्हेण। अस्याश्चान्तरापत्तेर्मूलमानाप्यमिति। तस्य ते भिक्षवः पूर्विकाया आपत्तेर्मानाप्यं ददति धर्मेण कर्मणाकोप्येनास्थापनार्हेण। अस्यास्त्वन्तरापत्तेर्मूलमानाप्यमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। [4] स मूलमानाप्यचारिक एव सन् संघावशेषामापत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपामप्रतिच्छन्नाम्। स तां प्रत्यन्तरापत्तिं जानाति। ताम[प्य]न्तरापत्तिं जानाति यस्या अस्य संघेन मूलमानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। स भिक्षूणामारोचयति। अहम[स्म्या]युष्मन्तः संघावशेषामापत्तिमापन्नः अन्तरापत्तिं पूर्वापत्तिप्रतिरूपामप्रतिच्छन्नाम्। तस्य मम संघेन मूलमानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। सोऽहं मूलमानाप्यचारिक एव सन् संघावशेषामा-

पत्तिमापन्नः प्रत्यन्तरापत्तिमन्तरापत्तिप्रतिरूपामप्रतिच्छन्नाम्। सोऽहं तां प्रत्यन्तरापत्तिं जानामि। तामप्यन्तरापत्तिं जानामि यस्या मम संघेन मूलमानाप्यं दत्तमधर्मेण कर्मणा कोप्येन स्थापनार्हेण। साधु मे आयुष्मन्तस्तस्याः पूर्विकाया अन्तरापत्तेर्मूलमानाप्यं ददतु धर्मेण कर्मणाकोप्येनास्थापनार्हेण। अस्याश्च प्रत्यन्तरापत्तेर्मूलापकर्षमानाप्यमिति। तस्य ते भिक्षवः पूर्विकाया आपत्तेर्मूलमानाप्यं ददति धर्मेण कर्मणाकोप्येनास्थापनार्हेण। अस्यास्तु प्रत्यन्तरापत्तेर्मूलापकर्षमानाप्यमिति। यथा जानता चत्वारि एवं स्मरता चत्वारि वैमतिकेन चत्वारि।

पारिवासिकः पुद्गलः संघावशेषामापत्तिमापन्नः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। वस्तु शोधयित्वा विनयातिसारिणीं [च] दुष्ठुलामापत्तिं देशयित्वा पारिवासिक एव सन्[1]।

उपाधेपारिवासिकः [पुद्गलः] संघावशेषामापत्तिमापन्नः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। वस्तु शोधयित्वा विनयातिसारिणीं च दुष्ठुलामापत्तिं देशयित्वा उपार्धपारिवासिक एव सन्।

यद्भूयःपारिवासिक एव पुद्गलः संघावशेषामापत्तिमापन्नः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। वस्तु

1 Tib. 290a, l. 4-5 གཞི་ དག་ པར་ བྱས་ཏེ་ འདུལ་ བ་དང་ འགལ་ བའི་ ཉེས་ བྱས་ཀྱི་ ལྟུང་བ་ བཤགས་ ན་ སྤོ་བ་ སྤྱོད་པ་ཁོ་ ན་ ཡིན་ནོ་ ।। सन्, it seems, stands for भवितव्यः।

शोधयित्वा विनयातिसारिणीं च दुष्ठुलामापत्तिं देशयित्वा यद्भूयःपारिवासिक एव सन्।

मानाप्यचारिकः पुद्गलः संघावशेषामापत्तिमापन्नः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। वस्तु शोधयित्वा विनयातिसारिणीं च दुष्ठुलामापत्तिं देशयित्वा मानाप्यचारिक एव सन्।

उपार्धमानाप्यचारिकः पुद्गलः संघावशेषामापत्तिमापन्नः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। वस्तु शोधयित्वा विनयातिसारिणीं च दुष्ठुलामापत्तिं देशयित्वा उपार्धमानाप्यचारिक एव सन्।

यद्भूयोमानाप्यचारिकः पुद्गलः संघावशेषामापत्तिमापन्नः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। वस्तु शोधयित्वा विनयातिसारिणीं च दुष्ठुलामापत्तिं देशयित्वा यद्भूयोमानाप्यचारिक एव सन्।

अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामेकरात्रिप्रतिच्छन्नाम्। उद्ग्रहसमुत्थितां[1] द्विरात्रिप्रतिच्छन्नाम्। मैथुन[संलाप[2]]समुत्थितां त्रिरात्रिप्रतिच्छन्नाम्। परिचर्यासमुत्थितां चतूरात्रिप्रतिच्छन्नाम्। सांचरित्रसमुत्थितां पञ्चरात्रिप्रतिच्छन्नाम्। [3]कुटिकासमुत्थितां षड्रात्रिप्रतिच्छन्नाम्।

1 Tib. 290b, l 7 ལུས་ཀྱི་རེག་པ་ལས་གྱུར=कायसंस्पशसमुत्थिताम्।

2 Ibid. འཁྲིག་པ་དང་ལྡན་པ་སྨྲ་བ་ལས་གྱུར།

3 Tib. 291a, l. 1 ཁང་པ་ལས་གྱུར།

[1]महल्लकसमुत्थितां सप्तरात्रिप्रतिच्छन्नाम्। अमूलकसमुत्थितामष्टरात्रिप्रतिच्छन्नाम्। [2]लेशिसमुत्थितां नवरात्रिप्रतिच्छन्नाम्। संघभेदसमुत्थितां दशरात्रिप्रतिच्छन्नाम्। तस्यानुवर्तितसमुत्थितामेकादशरात्रिप्रतिच्छन्नाम्। कुलदूषिकसमुत्थितां द्वादशरात्रिप्रतिच्छन्नाम्। दौर्वचस्यसमुत्थितां त्रयोदशरात्रिप्रतिच्छन्नाम्। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। या आसामापत्तीनां खरतरा च गुरुतरा च तीव्रेण चातिनिवेशेन कृता तस्या वशेन परिवासो दातव्यो मूलपरिवासो मूलापकर्षो मानाप्यं चावर्हितव्यश्चेति।

पुद्गलवस्तु समाप्तम्[3] ॥

---

1 Ibid 1 2 ཁང་ ཆེན་ ལས་གྱུར །

2 Ibid. བག་ ཙམ་ ལས་གྱུར །

3 Tib. 291a, l. 6 འདུལ་ བ་ བཞི་ བམ་པོ་ དོན་ གསུམ་ པ ། །

वस्तुत्रयस्य[1] पिण्डोद्दानम् ।

**अभिवादनं[2] च षष्टिश्च[3] अशुद्धश्चोदनाहि[4] च ।**

**अधार्मिकश्च शाक्यश्च[5] ग्लानकः कलहेन च ॥**

མངོན་དུ་ སྨྲས་དང་ དྲག་དང་ ན །

མ་དག་ པ་དང་ གླེང་བ དང་ ། །

ཆོས་མ་ཡིན་ དང་ ཤག་ཀྱང་ དང་ །

ནད་པ་ དང་ ནི་ རྩོད་ པའོ། །

Tib 291a, l. 6-7 ·

1 See above, p 1. The three vastus are —

पारिवासिक, पोषधस्थापन and शयनासन ।

2 See p. 63.

3 See p. 100.

4 See p. 107.

5 See p 121

पारिवासिकवस्तूद्दानम् ।

**अभिवादनं चंक्रमणमासनानि कुलानि च ।**
**एकच्छदने न संवसेत् न प्रव्राजयेदपि ।**
**न गच्छेदपि, अभिक्षुकमावासमधोदेशाश्च सर्वलाभिकम्[1] ॥**

बुद्धो भगवान् श्रावस्त्यां विहरति जेतवने अनाथपिण्डदस्यारामे । असति वैराग्ये भिक्षवः संघावशेषामापत्तिमापद्यन्ते । ते विप्रतिसारजाताः संलक्षयन्ति । कथमिदानीं वयं सापत्तिकाः सन्तः सकौकृत्याः सविलोलाः सकरणीयाः खण्डकारिणः शवलकारिणः कल्मषकारिणः आपत्तिमूलादव्युत्थिताः[2] प्रकृतिस्थकानां भिक्षूणामन्तिकादभिवादनवन्दनप्रत्युत्थानांजलिसामीचीकर्म स्वीकरिष्यामः । श्राद्धानां च ब्राह्मणगृहपतीनां सकाशादग्रासनमग्रोदकमग्रपिण्डपातं परिभोक्ष्यामः । अल्पकालिकस्य च सुखस्यार्थाय बहुकालिकं दुःखमाविशामो नरकतिर्यक्प्रेतेभ्यः[3] परिभ्रमन्तः । यत्तु[4] वयं शिक्षां प्रत्याख्याय हानायावर्तामह इति ते शिक्षां प्रत्याख्याय हानायावर्तन्ते[5] । प्रव्रज्याभिलषितं च जनं विप्रलम्भयन्ति । भवन्तो दुश्चरं ब्रह्मचर्यमलं प्रव्रज्ययेति । तेषामप्रव्रजिता[ना]मप्रव्राज[य]तां चाल्पीभूता भिक्षवः । क्षय-

1 Tib. 291b, l. 1 ཀུན་གྱི་ འོག་ཏུ་ སྦྱིན་པ་ བྱ་བའོ །=सर्वपश्चाद्लाभिकम् ।

2 Ms. आपत्तिपातालाद॰ Tib. 291b, l 4 ལྟུང་བའི་གཞི་ནས་མ་ལངས་པ །

3 Tib. 291b, l 6 ཉམས་སུ་ མྱོང་ ཞིང །

4 Ibid ད་ལ །=Presently.

5 The reasoning is that it is better to remain a householder than to become bhiksu committing a Sanghādiśesa offence

मापन्नश्छिद्रीभूतस्तनुभूतो भिक्षुसंघः। जानकाः पृच्छका बुद्धं भगवन्तं पृच्छन्ति। बुद्धो भगवानायुष्मन्तमानन्दम्। कः आनन्द हेतुः कः प्रत्ययः येनैतर्ह्यल्पीभूता भिक्षवः। क्षयमापन्नश्छिद्रीभूतस्तनुभूतो भिक्षुसंघ इति। स एतत्प्रकरणं भगवते विस्तरेणारोचयति।

अथ भगवत एतदभवत्। यत्त्वहं संघावशेषामापत्तिमापन्नानां भिक्षूणां [1]हस्तोद्धारमनुप्रदद्यामनुग्रहमनेनेति विदित्वा [भिक्षु]संघं संनिपात्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। निषद्य भगवान्भिक्षूनामन्त्रयते स्म। श्रुतं मया भिक्षवः संघावशेषामापत्तिमापन्ना विप्रतिसारजाताः शिक्षां प्रत्याख्याय हानायावृत्ता इति[2]। तस्माद्युष्माभिः शासनस्थितये तेषां चानुकम्पया संघावशेषामापत्तिमापन्नानां भिक्षूणां परिवासो देयो मूलापकर्षो मानाप्यं मूलपानाप्यं मूलापकर्षमानाप्यमावर्हितव्यश्च।

एवं च पुनर्देयः। शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून् समनुयुज्य सर्वसंघे संनिषण्णे संनिपतिते अपश्चिमकेन भिक्षुणा परिवासो देयश्चतुर्वर्गमण्डलकेन। संघावशेषकेण भिक्षुणा यथावृद्धिकया सामीचीं कृत्वा वृद्धान्ते उत्कुटुकेन स्थित्वाञ्जलिं प्रगृह्य परिवासो याचितव्यः। एवं च पुनर्याचितव्यः।

1 Tib. 292a, p. 5 རྗེས་སུ་གཟུང་བ་བཅའ་བས་ལག་ནས་དྲང་བ།

2 See above fn. 5.

शृणोतु भदन्तः संघः। अहमेवंनामा भिक्षुः संबहुलाः संघावशेषा आपत्तीरापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थिता-मर्धमासप्रतिच्छन्नाम्। सोऽहमेवंनामा भिक्षुस्तासां संबहुलानां संघाव-शेषाणामापत्तीनां संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्धमासप्रति-च्छन्नां संघादर्धमासं परिवासं याचे। ददातु मे भदन्तः संघो ममैवंनाम्नो भिक्षोरासां संबहुलानां संघावशेषाणामपत्तीनां संचिन्त्य शुक्रविसृष्टिसमुत्थितानामर्धमासप्रतिच्छन्नानामर्धमासं परिवास-मनुकम्पयानुकम्पामुपादाय। एवं द्विरपि त्रिरपि। ततः पश्चादे-केन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अयमेवंनामा भिक्षुः संबहुलाः संघावशेषा आपत्तीरापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थितामर्ध-मासप्रतिच्छन्नाम्। सोऽयमेवंनामा भिक्षुरासां [सं]बहुलानां संघावशेषाणामापत्तीनां संचिन्त्य शुक्रविसृष्टिसमुत्थितानामर्धमास-प्रतिच्छन्नानां संघादर्धमासं परिवासं याचते। स चेत्संघस्य प्राप्त-कालं क्षमेतानुजानीयात्संघो यत्संघः एवंनाम्नोभिक्षोरासां संबहु-लानां संघावशेषाणामापत्तीनां संचिन्त्य शुक्रविसृष्टिसमुत्थितानाम-र्धमासप्रतिच्छन्नानामर्धमासं परिवासं दद्यात्। इत्येषा ज्ञप्तिः। कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः अयमेवंनामा भिक्षुः संबहुलाः संघावशेषा आपत्तीरापन्नः संचिन्त्य शुक्रविसृष्टिसमुत्थिता अर्ध-मासप्रतिच्छन्नाः। सोऽयमेवंनामा भिक्षुरासां संबहुलानां संघाव-शेषाणामापत्तीनां संचिन्त्य शुक्रविसृष्टिसमुत्थितानामर्धमास-

प्रतिच्छन्नानां संघादर्धमासं परिवासं याचते। तत्संघः एवंनाम्नोर्भिक्षोरासां [सं]बहुलानां संघावशेषाणामापत्तीनां संचिन्त्य शुक्रविसृष्टिसमुत्थितानामर्धमासं परिवासं ददाति। एषामायुष्मतां क्षमन्ते एवंनाम्नोर्भिक्षोरासां संबहुलानां संघावशेषाणामापत्तीनां संचिन्त्य शुक्रविसृष्टिसमुत्थितानामर्धमासप्रतिच्छन्नानामर्धमासं परिवासं दातुं ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। इयं प्रथमा कर्मवाचना वक्तव्या। दत्तः संघेन एवंनाम्नोर्भिक्षोरासां संबहुलानां संघावशेषाणामापत्तीनां संचिन्त्य शुक्रविसृष्टिसमुत्थितानामर्धमासप्रतिच्छन्नानामर्धमासं परिवासः। क्षान्तमनुज्ञातं संघेन यस्मात्तूष्णीमेवमेतद्धारयामि। उक्तं भगवता। परिवासो दातव्यो मूलपरिवास इति विस्तरः।

षड्वर्गिका भिक्षवः पारिवासिकमानाप्यचारिकाः सन्तः प्रकृतिस्थकानां भिक्षूणामन्तिकादभिवादन-वन्दन-प्रत्युत्थानाञ्जलिसामीचीकर्म स्वीकुर्वन्ति। अल्पार्थां भिक्षवोऽवध्यायन्ति क्षिपन्ति विवाचयन्ति तदिदं न च्छेकं न प्रतिरूपं यत्रेदानीं पारिवासिकमानाप्यचारिका भिक्षवः प्रकृतिस्थकानां भिक्षूणामन्तिकादभिवादन-वन्दन-प्रत्युत्थानांजलिसामीचीकर्म स्वीकुर्वन्तीति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। पारिवासिकमानाप्यचारिकाणामहं भिक्षवो भिक्षूणामासमुदाचारिकान्धर्मान्प्रज्ञपयामि। पारिवासिकमानाप्यचारिकैर्भिक्षुभिः प्रकृतिस्थकानां भिक्षूणामन्तिकादभिवादन-वन्दन-[प्रत्यु]त्थानांजलिसामीचीकर्म [न] स्वीकर्तव्यम्। नैकासने निषत्त-

व्यम्। नापि समासते। सचेन्निषीदन्ति नीचतरमासनं गृहीत्वा निषत्तव्यम्। न चंक्रमे युगपच्चंक्रमितव्यम्। नाप्यग्रतः। सचेच्चंक्रमे चंक्रमन्ति पदपरिहाणिकया[1]। न ब्राह्मणकुलानि उपसंक्रमितव्यम्। सचेदुपसंक्रमन्ति पश्चाच्छ्रमणन्यायेन। नैकच्छदने वस्तव्यम्। न प्रव्राजयितव्यम्। नोपसंपादयितव्यम्। न निश्रयो देयः। न श्रमणोद्देशी उपस्थापयितव्यः। न कर्म कर्तव्यम्। न कर्मकारकः संमन्तव्यः। न भिक्षुण्योऽववदितव्याः। न भिक्षुण्यववादकः संमन्तव्यः। न पूर्वसंमतेन भिक्षुण्योऽववदितव्याः। न भिक्षुश्चोदयितव्यः स्मारयितव्यः शीलविपत्त्या दृष्टिविपत्त्या आचारविपत्त्या आजीवविपत्त्या। नानेनाववादः स्थापयितव्यः। न पोषधो न प्रवारणा न ज्ञप्तिर्न ज्ञप्तिद्वितीयं न ज्ञप्तिचतुर्थं कर्म। काल्यमेवोत्थाय द्वारं मोक्तव्यम्। [2]दीपस्थालक उद्धर्तव्यः। विहारः सेक्तव्यः। संमार्ष्टव्यः। सुकुमारी गोमयकार्षी अनुप्रदातव्या। प्रस्रावोच्चारकुटी धावयितव्या। मृत्तिका उपस्थापयितव्या पात्राणि पानीयं शीतलं वा कालानुरूपतः। प्रणाडिकामुखानि धावयितव्यानि। कालं ज्ञात्वासनप्रज्ञप्तिं कृत्वा धूपकटच्छुके धूपश्चोपस्थापयितव्यः। स चेत्प्रतिबलो भवति शास्तुर्गुणसंकीर्तनं कर्तुं स्वयमेव कर्तव्यम्। नोचेद्भाषणकः प्रष्टव्यः। उपान्वाहारं प्रत्यवेक्ष्योपान्वाहृतं चेच्छरणपृष्ठमभिरुह्य गण्डि-

1 Tib. 294a, l. 7 གལ་ཏེ་ འཆག་ སར་ འཆག་ ན་ གོམ་ པ་ བསྣོར་ །

2 Ms. द्वीप०

दातव्या[1] । निदाघकाले भिक्षूणां व्यजनं ग्रहीतव्यम् । ततः सर्वोपसंपन्नानां चोपरिष्टाच्छान्तेनेर्यापथवर्तिना भिक्षुसंघमुपस्थाप्य भोक्तव्यम् । कृतभक्तकृत्येन शयनासनं छन्ने गोपयितव्यम् । पात्राधिष्ठानं छोरयितव्यम् । कालं ज्ञात्वा तथागतकेशनखस्तूपाः संमार्ष्टव्याः सुकुमारी गोमयकार्षी अनुप्रदातव्या । सामग्रीवेलायां पुनः शयनासनप्रज्ञप्तिः कर्तव्या । धूपकटच्छुके[धूप] उपस्थापयितव्यः । शास्तुर्गुणसंकीर्तनं पूर्ववत् कर्तव्यम् । दिवस आरोचयितव्यः । शृणोतु भदन्तः संघः । अद्य पक्षस्य दशमीत्येवमादि यथा उपधिवारिका आरोचयन्ति । ततः परिवास आरोचयितव्यः । शृणोतु भदन्तः संघः । अहमेवंनामा भिक्षुरेवंरूपां चैवंरूपां च संघावशेषामापत्तिमापन्न इयत्कालप्रतिच्छन्नाम् । तस्य मम संघेन इयत्कालं परिवासो दत्तः । ततो मया इयच्चरितं शिष्टं चरितव्यम् । पारिवासिकं मां भदन्तः संघो धारयतु मानाप्यचारिकं चेति ।

उक्तं भगवता । परिवास आरोचयितव्यः । इत्यागन्तुकानां नारोचयति । भगवानाह । आगन्तुकानामारोचयितव्यमिति । उक्तं भगवता । आगन्तुकानामप्यारोचयितव्यमिति । अन्यतमश्च भिक्षुरागन्तुक आगतः । स यावन्न पात्रचीवरं स्थापयति तावत् पारिवासिकोऽस्य पुरतः स्थित्वा कथयति । [2]समन्वाहर मामायुष्म-

1 Tib. 294b, 1. 7. ཁ་ཟས་ ཀྱིས་ གཡོས་ ལ་ བཏགས་ཏེ་ གཡོས་ ཟིན་ ན་ ཁང་པའི་ སྟེང་དུ་ འཛེགས་ཏེ གཏི་ བཏུངས་ པར་བྱའོ །

2 Tib. 295b, 1 4 དགོངསུ་ གསོལ །

न्नहमेवंनामा भिक्षुः संघावशेषामापत्तिमापन्नः । पूर्ववद्यावत् पारिवासिकं मामायुष्मान्धारयत्विति ।

स तस्यान्तिके पर्यवस्थितः कथयति[1] । अपेहि मम पुरस्तान्मोहपुरुष मा परिवासो मा [2]त्वमिति । स लज्जापरिगतहृदयोऽवाङ्मुखो मन्दगतिप्रचारतया तस्य भिक्षोः सकाशात्प्रक्रान्तः । एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति । भगवानाह । आगन्तुकस्य भिक्षोः पात्रचीवरे अप्रतिशामिते नारोचयितव्यम् । अपि तु न एकैकस्यारोचयितव्यम् । किन्तु सर्वसंघे संनिषण्णे संनिपतित इति । भगवानाह । गण्डग्रामाकोटितायां यथा संनिहितानामारोचयितव्यम् ।

न चानेनाभिक्षुकं विहारं गन्तव्यम् । सचेद्गच्छति न तत्र वस्तव्यम् ।

विकाले भिक्षूणामुष्णेन शीताम्बुना वा यथाकालं पादाः शोचितव्याः । म्रक्षयितव्याः । न चेदिच्छन्ति । स्नेहलाभोपसंहारः कर्तव्यः । ततः स्मृतिमुपस्थाप्य उत्थानसंज्ञिना शय्या कल्पयितव्या ।

पारिवासिकमानाप्यचारिका भिक्षवो यथा प्रज्ञप्तानासमुदाचारिकान्धर्मान्न समादाय वर्तन्ते सातिसारा भवन्ति ।

तस्य विहारं नोद्दिशन्ति । लाभं नानुप्रयच्छन्ति । भगवानाह । सर्वपश्चात्तस्य विहार उद्देष्टव्यः । सर्वपश्चाच्च लाभो देयः ।

1 Ibid, l. 5 ཀུན་ནས་དཀྲིས་པས་སྨྲས་པ།

3 Ibid. l. 7: མི་དགོས=I do not need you.

उद्दानम् ।

**षष्टिशतं कुर्यात्पुद्गलश्चैव विंशिकात् ।**

**संघे मानाप्यं चरितव्यमागताः प्रतिवैकारिका[1]ः ॥**

षड्वर्गिकाः पारिवासिकमानाप्यचारिकाः सन्तो भिक्षूणां [परिवासं][2] प्रददति । एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति । भगवानाह । न चतुर्भिः पारिवासिकैर्भिक्षोः परिवासो दातव्यः । न त्रिभिः पारिवासिकैरेकेन प्रकृतिस्थेन । न द्वाभ्यां पारिवासिकाभ्यां द्वाभ्यां प्रकृतिस्थकाभ्याम् । नैकेन पारिवासिकेन न त्रिभिः प्रकृतिस्थकैः । किन्तु सर्वैः परिशुद्धैः समानदृष्टिभिर्भिक्षोः परिवासो दातव्यः ।

**यथा पारिवासिकैरेवं मूलपारिवासिकैर्मानाप्यचारिकैश्चरितमानाप्यैः ।**

यथा परिवासमेवं मूलपरिवसं मूलापकर्षं मानाप्यं मूलमानाप्यं मूलापकर्षमानाप्यं च ।

षड्वर्गिका भिक्षवः पारिवासिकमानाप्यचारिकाः सन्तो भिक्षूनावर्हन्ति । एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति । भगवानाह । न विंशत्या पारिवासिकैर्भिक्षुरावर्हितव्यः । न एकोनविंशत्या[3] पारिवासिकैरेकेन प्रकृतिस्थकेन । नाष्टादशभिः पारिवासिकैर्द्वाभ्यां प्रकृतिस्थकाभ्यामेवं यावन्न एकोनविंशत्या[3] प्रकृतिस्थकैरेकेन [पारिवासिकेन] ।

1 Tib. 296a, l 7 ཞ་ཁོན་ཅན་ དང་ འོང་ བའོ།

2 Tib. 296a, l. 7 སྤོ་བ་ བྱིན་ པ།

3 Ms. एकान्नविशत्या ।

**यथा पारिवासिकैरेवं पर्युषितपरिवासैर्मानाप्यैश्चारितमानाप्यैः शिक्षादत्तकैश्च**

षड्वर्गिका भिक्षवः पारिवासिकमानाप्यचारिकाः सन्तः पारिवासिकानां भिक्षूणामन्तिके परिवासं चरन्ति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। न भिक्षुणा चतुर्णां पारिवासिकानामन्तिकात् परिवासश्चरितव्यः। न त्रयाणां पारिवासिकानामेकस्य प्रकृतिस्थकस्य। न द्वयोः पारिवासिकयोर्द्वयोः प्रकृतिस्थ[क]योः। न त्रयाणां प्रकृतिस्थकानामेकस्य पारिवासिकस्य। अपि तु सर्वेषां परिशुद्धानां समानदृष्टिकानामन्तिकात्परिवासश्चरितव्यः।

**यथा पारिवासिकानामेवं पर्युषितपारिवासिकानां मानाप्यचारिकाणां चरितमानाप्यानां शिक्षादत्तकानां च।**

यथा परिवासमेवं मूलपरिवासं मूलापकर्षं मानाप्यं मूलमानाप्यं मूलापकर्षमानाप्यं चरन्ति।

षड्वर्गिका भिक्षवः पारिवासिकमानाप्यचारिकाः सन्तः शून्यविहारं गत्वा परिवासं चरन्ति। ते भिक्षुभिर्दृष्टा उक्ताश्च। आयुष्मन्तः किमेष विहारो युष्माभिरावासितः[1]। ते कथयन्ति। नायमस्माभिरावासितः[1]। किंतु परिवासं चराम इति। ते कथयन्ति। यूयं परिवासं चरथ। किं तर्हि प्रच्छाद्यन्ते। तैरभ्याहतास्तूष्णीमवस्थिताः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। न भिक्षवः शून्यागारे परिवासश्चरितव्यो नापि यत्रैको भिक्षुर्द्वौ त्रयो वा। अपि तु यत्र

1 Ms आभासितः; Tib. 297b, 1 1 གནས་ སམ།

चत्वारो भिक्षवः परिशुद्धाः समानदृष्टयः प्रतिवसन्ति तत्र परिवासश्चरितव्यः ।

यथा परिवास एव मूलपरिवासो मूलापकर्षो मानाप्यं मूलमानाप्यं मूलापकर्षमानाप्यं च ।

अथायुष्मानुदाली बुद्धं भगवन्तं पृच्छति । यथापि तद्भदन्त पारिवासिकमानाप्यचारिकैः [श्रुतं] भिक्षव आगच्छन्ति कलहकारका भण्डनकारका विग्रहकारका विवादकारका आधिकरणिकाः । तेऽस्मांश्चोदयिष्यन्ति अलज्जितेन वा वैतरिकेण वा इति । तैस्तेषां कथं प्रतिपत्तव्यमिति । भगवानाह । पारिवासिकमानाप्यचारिकैरुदालिन् भिक्षुभिः कलहकारका भिक्षव आगच्छन्तीति[1] श्रुत्वा स परिवासो भिक्षोः पुरस्तात्प्रतिनिस्रष्टव्यः[2] । एवं च पुनः प्रतिनिस्रष्टव्यः[2] । सामीचीं कृत्वा उत्कुटुकेन स्थित्वाञ्जलिं प्रगृह्य इदं स्याद्वचनीयम् । समन्वाहरायुष्मन्नहमेवंनामा एवंरूपां चैवंरूपां च संघावशेषामापत्तिमापन्नः इयच्चिरकालप्रतिच्छन्नाम् । तस्य मम संघेन इयन्तं कालं परिवासो दत्तः । तेन मया पारिवासिकेन सता श्रुतं भिक्षव आगच्छन्ति कलहकारका भण्डनकारका विग्रहकारका विवादकारका आधिकरणिकास्ते मां चोदयिष्यन्ति स्मारयिष्यन्ति अलज्जितेन वा वैतरिकेण वा । सोऽहमेवंनामा पारिवासिको भिक्षुस्तं परिवासमायुष्मतः पुरस्तात्प्रतिनिसृजामि । इयत्कालं मे चरितमियत्कालं तु चरितव्यम् । प्रकृतिस्थकं

1 Ms. ०कारकान् भिक्षूनागच्छन्ति । 2 Ms प्रतिनिसृष्टव्यः ।

मामायुष्मन्धारयत्विति । ततः पुनरपि गतवेगैर्हतवेगैर्गतप्रत्यर्थिकै[1]-स्तथैव प्रकृतिस्थकस्य भिक्षोः पुरस्तात्परिवासः समादातव्यः । एवं च पुनः समादातव्यः । सामीचीं कृत्वा उत्कुटुकेन स्थित्वाञ्जलिं प्रगृह्य इदं स्याद्वचनीयम् । समन्वाहरायुष्मन्नहमेवंनामा भिक्षुरेवं-रूपां चैवंरूपां च संघावशेषामापत्तिमापन्नः इयच्चिरकालप्रति-च्छन्नाम् । तस्य मम संघेन इयन्तं कालं परिवासो दत्तः । तेन मया पारिवासिकेन श्रुतं भिक्षव आगच्छन्ति कलहकारका भण्डनकारका विग्रहकारका विवादकारका आधिकरणिकास्ते मां चोदयिष्यन्ति स्मारयिष्यन्ति . अलज्जितेन वैतरिकेणेति । तन्मया पारिवासिकवृत्तं भिक्षोः पुरस्तात्प्रतिनिसृष्टम् । सोऽहमेवं-नामा भिक्षुस्तं परिवासमायुष्मंतः पुरस्तात् समाददे । इयत्कालं मे चरितमियत्कालं मे कर्तव्यं भविष्यति । पारिवासिकं मामायुष्मन्धारयतु ।

यथा परिवास एवं मूलपरिवासो मूलापकर्षो मानाप्यं च ।

पारिवासिकवस्तु समाप्तम् ॥

---

1 Tib. 298a, 1 7 དེ་ནས་ཡང་ རས་ཀྱི་ ཀློག་པ་ སོང་ ཞིང་ འཇིགས་པ་དང་ བག་ཚ་བ་ མེད་ ནས །

[ पोषधस्थापनवस्तूद्दानम्[1] । ]

अशुद्धपोषधाद्भिक्षुर्मौद्गल्यायणेन नाशितः ।
ततः शास्त्राणि विगर्हित्वा संघेन पृष्टः पोषधः ॥
एषा उद्दानगाथा चम्पायां पोषधसूत्रे विस्तरेण ।
तच्च पोषधसूत्रं मध्यमागमे संगीत-निपाते पठ्यते ॥

उद्दानम् ।

चोदनात्स्मारणाच्चैव अवकाशोऽवचनीयतः ।
अववादः प्रस्थापनं पोषधश्च प्रवारणा ॥

उक्तं भगवता संघस्थविरेण त्वर्धमासं प्रातिमोक्षसूत्रोद्देश उद्देष्टव्य इति । उपधिवारिकः संघस्थविरस्य पुरस्तात् स्थित्वा कथयति । स्थविर प्रातिमोक्षसूत्रोद्देशमुद्दिशेति । स कथयति । आयुष्मन्न शुद्धा तावद्भिक्षुपर्षत् । कोऽत्र स्थविरेणापरिशुद्धो दृष्टः । त्वमेव तावत् । कथमहं स्थविरेण दृष्टः । दिव्येन चक्षुषा । हन्तेदानीं नष्टाः स्मः । यत्र भिक्षवो दिव्येन चक्षुषा दृष्ट्वा चोदयन्ति स्मारयन्ति । इत्येतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति । भगवानाह । असंव्यवहार्यं भिक्षवो दिव्यचक्षुः । तस्मान्न भिक्षुणा दिव्येन चक्षुषा दृष्ट्वा भिक्षुश्चोदयितव्यः स्मारयितव्यः । भिक्षुर्दिव्येन चक्षुषा दृष्ट्वा भिक्षुं चोदयति स्मारयति सातिसारो भवति ।

यथा दिव्येन चक्षुषा एवं दिव्येन श्रोत्रेण ।

पुनरप्यसावुपधिवारिकः संघस्थविरस्य पुरतः स्थित्वा कथयति । स्थविर प्रातिमोक्षसूत्रोद्देशमुद्दिशेति । स कथयति ।

1 Tib. 299a, l. 1.

आयुष्मन्नपरिशुद्धा तावद्भिक्षुपर्षत्। स्थविर कोऽत्रापरिशुद्धः। त्वमेव तावत्। स्थविर कथं नाम त्वया संघमध्ये मम शिरसि मुष्टिर्निपातिता। अहो वताहं त्वया एकान्ते चोदितः स्यामिति। स तूष्णीमवस्थितः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। एकान्ते चोदयितव्यो न संघमध्ये। सचेदेकान्ते चोद्यमानो न स्मरति स्मारयितव्यः। स्मारितश्चेत्कोपमापद्यते। अवकाशः कारयितव्यः। अवकाशं कार्यमाणोऽन्येनान्यं प्रतिसरति[1]। भगवानाह। अवचनीयः कर्तव्यः। अवचनीयः कृतः। तथाप्यन्येनान्यं प्रतिसरति। भगवानाह। अववादोऽस्य स्थापयितव्यः पोषधः प्रवारणा च।

एकमधार्मिकं पोषधस्थापनमेकं धार्मिकम्। द्वे अधार्मिके [द्वे धार्मिके]। त्रीण्यधार्मिकाणि त्रीणि धार्मिकाणि। चत्वार्यधार्मिकाणि चत्वारि धार्मिकाणि। पंचाधार्मिकाणि पंच धार्मिकाणि। षडधार्मिकाणि षड् धार्मिकाणि। सप्ताधार्मिकाणि सप्त धार्मिकाणि। अष्टावधार्मिकाणि अष्टौ धार्मिकाणि। नवाधार्मिकाणि नव धार्मिकाणि। दशाधार्मिकाणि दश धार्मिकाणि पोषधस्थापनानि।

एकमधार्मिकं पोषधस्थापनमेकं धार्मिकम्। अधार्मिकं कतरत्। अमूलकेन कृतेन पोषधं स्थापयति अधार्मिकं पोषधस्थापनम्। धार्मिकं पोषधस्थापनं [कतरत्।] समूलकेन कृतेन

1 Tib. 299b, l. 7 གཞན་ནས་གཞན་དུ་བསྐྱུར་ནས།

पोषधं स्थापयति धार्मिकं पोषधस्थापनम्। इदमेकमधार्मिकं पोषधस्थापनमेकं धार्मिकम्।

द्वे अधार्मिके पोषधस्थापने द्वे धार्मिके। कतमे। अमूलकेनाकृतेनामूलकेन कृतेन पोषधं स्थापयति अधार्मिकं पोषधस्थापनम्। समूलकेनाकृतेन समूलकेन कृतेन पोषधं स्थापयति धार्मिकं पोषधस्थापनम्। इमे द्वे अधार्मिके पोषधस्थापने द्वे धार्मिके।

त्रीण्यधार्मिकाणि त्रीणि धार्मिकाणि पोषधस्थापनानि। कतमानि। अमूलकेन कृतेन अमूलकेनाकृतेन अमूलकेन कृताकृतेन पोषधं स्थापयति अधार्मिकं पोषधस्थापनम्। समूलकेन कृतेन समूलकेनाकृतेन समूलकेन कृताकृतेन पोषधं स्थापयति धार्मिकं पोषधस्थापनम्। इमानि त्रीण्यधार्मिकाणि पोषधस्थापनानि त्रीणि धार्मिकाणि।

चत्वार्यधार्मिकाणि चत्वारि धार्मिकाणि पोषधस्थापनानि। कतमानि। अमूलिकया शीलविपत्त्या दृष्टिविपत्त्या आचारविपत्त्या आजीवविपत्त्या पोषधं स्थापयत्यधार्मिकं पोषधस्थापनम्। समूलिकया शीलविपत्त्या दृष्टिविपत्त्या आचारविपत्त्या आजीवविपत्त्या पोषधं स्थापयति धार्मिकं पोषधस्थापनम्। इमानि चत्वार्यधार्मिकाणि पोषधस्थापनानि चत्वारि धार्मिकाणि।

पंचाधार्मिकाणि पंच धार्मिकाणि पोषधस्थापनानि। कतमानि। अमूलिकया पाराजिकया संघावशेषया पायन्तिकया प्रतिदेशनिकया दुष्टतया[1] पोषधं स्थापयत्यधार्मिकं पोषधस्थापनम्।

1 301a, l. 2 ཉེས་ བྱས། =दुष्कृतया

समूलिकया पाराजिकया संघावशेषया पायन्तिकया प्रतिदेश-नेकया दुष्कृतया पोषधं स्थाप[यति धार्मिकं पोषधस्थाप]नम्। इमानि पञ्चाधार्मिकाणि पोषधस्थापनानि पञ्च धार्मिकाणि।

षडधार्मिकाणि पोषधस्थापनानि षड् धार्मिकाणि पोषधस्थापनानि। कतमानि। अमूलकेन कृतेन अमूलकेनाकृतेन अमूलकेन कृताकृतेन। अमूलकेन कृतेन सावशेषेण अमूलके[नाकृतेन सावशेषेण अमूलके]न कृताकृतेन सावशेषेण पोषधं स्थापयत्यधार्मिकं पोपधस्थापनम्। समूलकेन कृतेन समूलकेनाकृतेन समूलकेन कृताकृतेन। [समूलकेन कृतेन सावशेषेण] समूलकेनाकृतेनं सावशेषेण समूलकेन कृताकृतेन सावशेषेण पोषधं स्थापयति धार्मिकं पोषधस्थापनम्। इमानि षडधार्मिकाणि पोषधस्थापनानि षड् धार्मिकाणि।

सप्ताधार्मिकाणि पोषधस्थापनानि सप्त धार्मिकाणि पोषधस्थापनानि। कतमानि। अमूलिकया शीलविपत्त्या दृष्टिविपत्त्या आचारविपत्त्या आजीवविपत्त्या [अमूलकेन] दृष्टेन श्रुतेन परिशंकितेन पोषधं स्थापयत्यधार्मिकं पोषधस्थापनम्। समूलिकया शीलविपत्त्या दृष्टिविपत्त्या आचारविपत्त्या आजीवविपत्त्या समूलकेन दृष्टेन श्रुतेन परिशंकितेन पोषधं स्थापयति धार्मिकं पोषधस्थापनम्। इमानि सप्ताधार्मिकाणि सप्त धार्मिकाणि पोषधस्थापनानि।

अष्टावधार्मिकाणि अष्टौ धार्मिकाणि पोषधस्थापनानि। कतमानि। अमूलिकया पाराजिकया संघावशेषया पायन्तिकया

प्रतिदेशनिकया दुष्टतया[1] अमूलकेन दृष्टेन श्रुतेन परिशंकितेन पोषधं स्थापयत्यधार्मिकं पोषधस्थापनम्। समूलिकया पाराजिकया संघावशेषया पायन्तिकया प्रतिदेशनिकया दुष्टतया समूलकेन दृष्टेन श्रुतेन परिशंकितेन पोषधं स्थापयति धार्मिकं पोषधस्थापनम्। इमान्यष्टावधार्मिकाणि पोषधस्थापनानि अष्टौ धार्मिकाणि।

नवाधार्मिकाणि नव धार्मिकाणि पोषधस्थापनानि। कतमानि। अमूलकेन कृतेन अमूलकेनाकृतेन अमूलकेन कृताकृतेन। अमूलकेन कृतेन सावशेषेण अमूलकेनाकृतेन सावशेषेण अमूलकेन कृताकृतेन सावशेषेण। अमूलकेन कृतेन निरवशेषेण अमूलकेनाकृतेन निरवशेषेण अमूलकेन कृताकृतेन निरवशेषेण पोषधं स्थापयति अधार्मिकं पोषधस्थापनम्। समूलकेन कृतेन समूलकेनाकृतेन समूलकेन कृताकृतेन। समूलकेन कृतेन सावशेषेण समूलकेनाकृतेन सावशेषेण समूलकेन कृताकृतेन सावशेषेण। समूलकेन कृतेन निरवशेषेण [समूलकेनाकृतेन निरवशेषेण] समूलकेन कृताकृतेन निरवशेषेण पोषधं स्थापयति धार्मिकं पोषधस्थापनम्। इमानि नवाधार्मिकाणि पोषधस्थापनानि नव धार्मिकाणि।

दशाधार्मिकाणि दश धार्मिकाणि पोषधस्थापनानि। कतमानि। पाराजिको न भवति। पाराजिककथा न विप्रकृता भवति। शिक्षा न प्रत्याख्याता भवति। शिक्षाप्रत्याख्यानकथा न

1 301b, l. 6: ཉེས་ བཅས་ །

विप्रकृता भवति । संघो न प्रत्याख्यातो भवति । संघप्रत्याख्यान-कथा न विप्रकृता भवति । शीलविपन्नो [न] भवति न दृष्टिविपन्नो नाचारविपन्नो नाजीवविपन्नः ।

कथं पाराजिको न भवति । यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैः पाराजिकामापत्तिमापद्यते तं च भिक्षुः पश्यति न तैराकारैर्न तैर्लिङ्गैर्न तैर्निमित्तैः पाराजिकामापत्तिमापद्यमानम् । स चादृष्ट्वा अश्रुत्वा अपरिशंक्य पोषधं स्थापयति । अधार्मिकं पोषधस्थाप-नम् । एवं पाराजिको न भवति ।

कथं पाराजिककथा न विप्रकृता भवति । यथापि तत्संबहुला भिक्षवः संनिषण्णा भवन्ति संनिपतिताः । सा च कथा न तज्जा भवति न तन्मया न विप्रकृता । ते च भिक्षवः उत्थायासनेभ्यो नाना विप्रक्रामन्ति । स चादृष्ट्वा अश्रुत्वा अपरिशंक्य च पोषधं स्थापयति । अधार्मिकं पोषधस्थापनम् । एवं पाराजिक-कथा न विप्रकृता भवति ।

कथं शिक्षा न प्रत्याख्याता भवति । यैराकारैर्यैर्लिङ्गैर्यै-र्निमित्तैः शिक्षाप्रत्याख्यानं क्रियते तं च भिक्षुः पश्यति न तैराकारैर्न तैर्लिङ्गैर्न तैर्निमित्तैः शिक्षाप्रत्याख्यानं कुर्वाणम् । स चादृष्ट्वा अश्रुत्वा अपरिशंक्य पोषधं स्थापयति । अधार्मिकं पोषधस्थापनम् । एवं शिक्षा प्रत्याख्याता न भवति ।

कथं शिक्षाप्रत्याख्यानकथा न विप्रकृता भवति । यथापि तत्संबहुला भिक्षवः संनिषण्णा भवन्ति संनिपतिताः । सा च कथा न तज्जा भवति न तन्मया न विप्रकृता भवति ।

ते च भिक्षव उत्थायासनेभ्यो नाना विप्रक्रामन्ति । स चादृष्ट्वा अश्रुत्वा अपरिशंक्य पोषधं स्थापयति । अधार्मिकं पोषधस्थापनम् । [एवं] शिक्षाप्रत्याख्यानकथा न विप्रकृता भवति ।

कथं संघो न प्रत्याख्यातो भवति । यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैः संघः प्रत्याख्यायते तं च भिक्षुः पश्यति न तैराकारैर्न तैर्लिङ्गैर्न तैर्निमित्तैः संघप्रत्याख्यानं कुर्वन्तम् । स चादृष्ट्वा अश्रुत्वा अपरिशंक्य पोषधं स्थापयति । अधार्मिकं पोषधस्थापनम् । एवं संघो न प्रत्याख्यातो भवति ।

कथं संघप्रत्याख्यानकथा न विप्रकृता भवति । यथापि तत्संबहुला भिक्षवः संनिषण्णा भवन्ति संनिपतिताः सा च कथा न तज्ञा भवति न तन्मया न विप्रकृता । ते च भिक्षव उत्थायासनेभ्यो नाना विप्रक्रामन्ति । स चादृष्ट्वा अश्रुत्वा अपरिशंक्य पोषधं स्थापयति । अधार्मिकं पोषधस्थापनम् । एवं संघप्रत्याख्यानकथा न विप्रकृता भवति ।

कथं न शीलविपन्नो भवति । चतुर्णां पाराजिकानाम[न्यतमा]न्यतमामापत्तिमापन्नो भवति । तस्य च भिक्षुरदृष्ट्वा अश्रुत्वा अपरिशंक्य पोषधं स्थापयति । अधार्मिकं पोषधस्थापनम् । एवं न शीलविपन्नो भवति ।

कथं न दृष्टिविपन्नो भवति । द्वाषष्टे र्दृष्टिगतानामन्यतरान्यतरां दृष्टिमनभिनिविष्टो भवति । तस्य च भिक्षुरदृष्ट्वा अश्रुत्वा अपरिशंक्य पोषधं स्थापयति । अधार्मिकं पोषधस्थापनम् । एवं न दृष्टिविपन्नो भवति ।

कथं नाचारविपन्नो भवति। आनुलोमिकैः शिक्षानुकूलैर्वचनपथैरुच्यमानः सम्यक् प्रतिपद्यते। तस्य च भिक्षुरदृष्ट्वा अश्रुत्वा अपरिशंक्य पोषधं स्थापयति। अधार्मिकं पोषधस्थापनम्। एवं नाचारविपन्नो भवति।

कथं नाजीवविपन्नो भवति। आजीवोऽस्य परिशुद्धो भवति। तस्य च भिक्षुरदृष्ट्वा अश्रुत्वा अपरिशंक्य पोषधं स्थापयति। अधार्मिकं पोपधस्थापनम्। एवं नाजीवविपन्नो भवति।

शुक्लपक्षे[1] पाराजिको भवति। पाराजिककथा विप्रकृता भवति। शिक्षा प्रत्याख्याता भवति। शिक्षाप्रत्याख्यानकथा विप्रकृता भवति। संघः प्रत्याख्यातो भवति। संघप्रत्याख्यानकथा विप्रकृता भवति। शीलविपन्नो भवति दृष्टिविपन्न आचारविपन्न आजीवविपन्नश्च।

कथं पाराजिको भवति। यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैः पाराजिकामापत्तिमापद्यते। तं च भिक्षुः पश्यति तैराकारैस्तैर्लिङ्गैस्तैर्निमित्तैः पाराजिकामापत्तिमापद्यमानम्। स दृष्ट्वा श्रुत्वा परिशंक्य पोषधं स्थापयति। धार्मिकं पोषधस्थापनम्। एवं पाराजिको भवति।

कथं पाराजिककथा विप्रकृता भवति। यथापि तत्संबहुला भिक्षवः संनिषण्णा भवन्ति संनिपतिताः। सा च कथा तज्जा भवति तन्मया विप्रकृता। ते च भिक्षवस्तथा संनिषण्णा

1 Tib. 304a, l. 6: དཀར་པོའི་ ཕྱོགས་ ལ །

एव। स च दृष्ट्वा श्रुत्वा परिशंक्य पोषधं स्थापयति। धार्मिकं पोषधस्थापनम्। एवं पाराजिककथा विप्रकृता भवति।

कथं शिक्षा प्रत्याख्याता भवति। यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैः शिक्षाप्रत्याख्यानं क्रियते तं च भिक्षुः पश्यति तैराकारैस्तैर्लिङ्गैस्तैर्निमित्तैः शिक्षाप्रत्याख्यानं कुर्वाणम्। स च दृष्ट्वा श्रुत्वा परिशंक्य पोषधं स्थापयति। धार्मिकं पोषधस्थापनम्। एवं शिक्षा प्रत्याख्याता भवति।

कथं शिक्षाप्रत्याख्यानकथा विप्रकृता भवति। यथापि तत्-संबहुला भिक्षवः संनिषण्णा भवन्ति संनिपतिताः। सा च कथा तज्जा भवति तन्मया विप्रकृता। ते च भिक्षवस्तथा संनिषण्णा एव। स च दृष्टा श्रुत्वा परिशंक्य पोषधं स्थापयति। धार्मिकं पोषधस्थापनम्। एवं शिक्षाप्रत्याख्यानकथा विप्रकृता भवति।

कथं संघः प्रत्याख्यातो भवति। यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैः संघः प्रत्याख्यायते तं च भिक्षुः पश्यति तैराकारैस्तैर्लिङ्गैस्तैर्निमित्तैः संघप्रत्याख्यानं कुर्वाणम्। स च दृष्ट्वा श्रुत्वा परिशंक्य पोषधं स्थापयति। धार्मिकं पोषधस्थापनम्। एवं संघः प्रत्याख्यातो भवति।

कथं संघप्रत्याख्यानकथा विप्रकृता भवति। यथापि तत्संबहुला भिक्षवः संनिषण्णा भवन्ति संनिपतिताः। सा च कथा तज्जा भवति तन्मया विप्रकृता। ते च भिक्षवस्तथा [सं]निषण्णा एव। स च दृष्ट्वा [श्रुत्वा] परिशंक्य पोषधं स्थापयति। धार्मिकं पोषध-स्थापनम। एवं संघप्रत्याख्यानकथा विप्रकृता भवति।

कथं शीलविपन्नो भवति। चतुर्णां पाराजिकानामन्यतमान्यतमामापत्तिमापन्नो भवति। तस्य च भिक्षुर्दृष्ट्वा श्रुत्वा परिशंक्य पोषधं स्थापयति। धार्मिकं पोषधस्थापनम्। एवं शीलविपन्नो भवति।

कथं दृष्टिविपन्नो भवति। द्वाषष्टेर्दृष्टिगतानामन्यतरान्यतरां दृष्टिमभिनिविष्टो भवति। तस्य च भिक्षुर्दृष्ट्वा श्रुत्वा परिशंक्य पोषधं स्थापयति। धार्मिकं पोषधस्थापनम्। एवं दृष्टिविपन्नो भवति।

कथमाचारविपन्नो भवति। आनुलोमिकैः शिक्षानुकूलैर्वचनपथैरुच्यमानो न सम्यक् प्रतिपद्यते। तस्य [च] भिक्षुर्दृष्ट्वा श्रुत्वा परिशंक्य पोषधं स्थापयति। धार्मिकं पोषधस्थापनम्। एवमाचारविपन्नो भवति।

कथमाजीवविपन्नो भवति। आजीवोऽस्यापरिशुद्धो भवति। तस्य [च] भिक्षुर्दृष्ट्वा श्रुत्वा परिशंक्य पोषधं स्थापयति। धार्मिकं पोषधस्थापनम्। एवमाजीवविपन्नो भवति।

इमानि दशाधार्मिकाणि दश धार्मिकाणि पोषधस्थापनानि। यथा पोषधस्थापनमेवं प्रवारणास्थापनम्।

पंचेमे भिक्षवः संघाः। कतमे पंच। अलज्जिसंघः एड[मू]कसंघः गणसंघः संवृतिसंघः परमार्थसंघश्च।

अलज्जिसंघः कतमः। यत्र सर्वे भिक्षवो दुःशीलाः पापधर्माणः। एडमूकसंघः कतमः। यत्र न सूत्रधरो न विनयधरो न मातृकाधरः। गणसंघः कतमः। यत्र गणसंबन्धेन कर्माणि

क्रियन्ते। [1]संवृतिसंघः कतमः। सर्वे पृथग्जनकल्याणकाः। परमार्थसंघः कतमः। शैक्षाशैक्षा अष्टौ महापुरुषपुद्गलाः। तत्र ये पूर्वकास्त्रयः संघाः अलज्जि[नः] संघः एडमूकसंघः गणसंघश्च लभ्यमेभिरधर्मेण कर्मणा कर्तुम्। योऽयं संवृतिसंघो लभ्यमनेन धर्मसंज्ञिना अधर्मेण कर्मणा कर्तुम्। यस्त्वयं परमार्थसंघो न लभ्यमनेनाधर्मेण कर्मणा कर्तुम्।

पोषधस्थापनवस्तु समाप्तम्[2] ॥

1 Tib. 306a, l. 4 ཀུན་རྫོབ་ = vain, spurious

2 Tib. 306b, l. 1 འདུལ་བ་ གཞི། བསམ་པོ་ དོན་ བཞི་ པ།

[ शयनासनवस्तूद्दानम् । ]

**शाक्याः पंचकाधश्च साङ्घिकं पौद्गलिकं च वस्तुभङ्गेन ।**
**कारयेत् प्रतिसंस्तरणभूमिमरण्यं च त्रिचीवरम् ।**
**उच्छेद्यमरण्यं भिक्षुस्थविरो लाभयाष्टौ भवति पश्चिमम्[1] ॥**

बुद्धो भगवान् श्रावस्त्यां विहरति जेतवने अनाथपिण्डदस्याारामे । तेन खलु समयेन संबहुलानां भिक्षूणामुपस्थानशालायां संनिषण्णानां संनिपतितानामयमेवंरूपोऽभूदन्तराकथासमुदाहारः । कोऽस्माभिरायुष्मन्तः सत्कर्तव्यो गुरुकर्तव्यो मानयितव्यः पूजयितव्यः । कस्य चास्माभिरभिवादन-वन्दन-प्रत्युत्थानांजलि-सामीचीकर्म कर्तव्यम् । कोऽस्माकमर्हति अग्रासनमग्रोदकमग्र-पिण्डपातं परिभोक्तुमिति । तत्रैके एवमाहुः शाक्यः प्रव्रजित इति । अन्ये त्वेवमाहुः यो ब्राह्मणः प्रव्रजित इति । अपरे यः क्षत्रियः प्रव्रजितः । अपरे यो वैश्यः प्रव्रजितः । अपरे यः शूद्रः प्रव्रजितः ।

1 Tib 306b, ll. 1-2

ཤཱཀྱ་ མིན་ བའི་ ལྔ་ སྡེ་ དང་ །
མགོ་ མེད་ དགེ་ འདུན་ གང་ ཟག་ གི །
དངོས་ པོ་ བཅོམ་ བའི་ ཕྱིར་ དང་ ནི །
གཞིབས་ པ་ཡི་ཌི་ ས་ དང་ ནི །
དགོན་ པ་ ཆོས་ གོས་ སྣམ་ པ་དང་ །
དགོན་ པ་ གནས་ བརྟན་ རྙེད་ པ་དང་ །
བརྒྱད་ པོ་ དག་ ནི་ ཕྱི་མ་ ཡིན །

अपरे उच्चात्कुलात्प्रव्रजितोऽन्यूनात् । आढ्यात्कुलात्प्रव्रजितोऽदीनात् । अपरे योऽभिरूपो दर्शनीयः प्रासादिकः कल्याणवाक्यो वाक्करणेनोपेतो[1] ज्ञातो महापुण्यः सूत्रधरो विनयधरो मातृकाधरो बहुश्रुतो धार्मकथिकः स्थविरो राजन्यः[2] आरण्यकः त्रैचीवरिको नामतिकः[3] पांसुकुलिकः पिण्डपातिकः एकासनिकः खलुपश्चाद्भक्तिको वृक्षमूलिकः श्माशानिकोऽभ्यवकाशिकः नैषदिको यथासंस्तरिको यो लाभी अनित्यसंज्ञायाः पूर्ववद्यावत् योऽर्हन्नष्टविमोक्षध्यायीति । अपरे एवमाहुः सर्वेषामस्माकमायुष्मन्तो न समेति[4] यदुत नाना प्रज्ञप्त्या । एते वयं येन भगवांस्तेनोपसंक्रमामः । उपसंक्रम्य भगवन्तमेतमर्थं परिपृच्छामः । यथास्माकं स भगवान् व्याकरिष्यति तथैनं धारयिष्याम इति ।

अथ संबहुला भिक्षवो येन भगवांस्तेनोपसंक्रान्ताः । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णाः । एकान्तनिषण्णाः संबहुला भिक्षवो भगवन्तमिदमवोचन् । इहास्माकं भदन्त संबहुलानां भिक्षूणामुपस्थानशालायां संनिषण्णानां संनिपतितानामयमेवंरूपोऽभूदन्तराकथासमुदाहारः। पूर्ववद्यावत् । यथास्माकं भगवान्व्याकरिष्यति तथैनं धारयिष्याम इति । ते वयं भदन्त भगवन्तमेतमेवार्थं परिपृच्छामः । कोऽस्माभिः

1 Cf. *Dīgha Nikāya*, I, p. 130 भवं हि कूटदन्तो कल्याणवाचो कल्याणवाक्करणो ।

2 Tib. 307a, l. 3-4: རྒྱལ་པོར་འོས་པ་དང་།

3 Ibid, l. 4 ཕྱིང་བ་ཅན་དང་། Cf. Mvyut. 49. 3.

4 Ibid., l 7 སོ་སོར་བཏགས་ནས་མི་འཐུན་པ་ཡིན་གྱིས་ཚུར་།

सत्कर्तव्यो गुरुकर्तव्यो मानयितव्यः पूजयितव्यः। पूर्ववद्यावद् अग्रपिण्डपातं परिभोक्तुमिति। भगवानाह। वृद्धतरको युष्माभिर्भिक्षवः सत्कर्तव्यो गुरुकर्तव्यो मानयितव्यः पूजयितव्यः। अभिवादन-वन्दन-प्रत्युत्थानांजलिसामीचीकर्म कर्तव्यम्। स च युष्माकमर्हत्यग्रासनमग्रोदकमग्रपिण्डपातं परिभोक्तुमिति।

उक्तं भगवता। वृद्धतरको भिक्षुर्युष्माभिः सत्कर्तव्यः। पूर्ववद्यावदग्रासनं परिभोक्तुमिति। भिक्षवः आगारिकान् वृद्धान् सत्कुर्वन्ति मानयन्ति पूजयन्ति। श्रुत्वा ब्राह्मणगृहपतयोऽवध्यायन्ति क्षिपन्ति विवाचयन्ति। आर्या वयं कामभोगिनः कामपंकनिमग्नाः। कथं यूयमस्माकं सत्कुर्वथ। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। प्रव्रजितान् भिक्षवो मया सन्धायोक्तं नो त्वागारिकानिति।

भिक्षवः अन्यतीर्थिकान्वृद्धान्दृष्ट्वा सत्कुर्वन्ति गुरुकुर्वन्ति मानयन्ति पूजयन्ति। भगवानाह। इह धार्मिकान्मया सन्धायोक्तं नो तु बाह्यकानिति।

ते श्रामणेरकान्वृद्धप्रव्रजितान्दृष्ट्वा सत्कुर्वन्ति गुरुकुर्वन्ति मानयन्ति पूजयन्ति। भगवानाह। उपसंपन्नान्भिक्षवो मया सन्धायोक्तं नो तु श्रामणेरकानिति।

ते नवोपसंपन्नान्वृद्धान्सत्कुर्वन्ति गुरुकुर्वन्ति मानयन्ति पूजयन्ति। भगवानाह। अन्योन्यं वर्षाग्रं पृष्ट्वा वन्दितव्यम्। ते पृष्टाः सन्तो जन्मवर्षाणि कथयन्ति। भगवानाह। उपसंपद्वर्षाग्रं प्रष्टव्यमिति। भिक्षवो न जानते [कति वर्षाग्राणीति]।

भगवानाह । सामयिकमारोचयितव्यम् । भिक्षवो न जानते कति सामयिकानीति । भगवानाह । पंचेमे भिक्षवः समयाः । हैमन्तिकं ग्रैष्मिकं वार्षिकं मृतवार्षिकं[1] दीर्घवार्षिकमिति । तत्र हैमन्तिकं चत्वारो मासाः । ग्रैष्मिकं चत्वारो मासाः । [वार्षिकमेको मासः] । मृतवार्षिकमेकं रात्रिन्दिवसम् । दीर्घवार्षिकं रात्र्यूनास्त्रयो मासाः । इत्येवं सामयिकमारोचयित्वा यः पूर्वोपसंपन्नः स वन्दितव्यः[2] ।

अपरे भिक्षवश्चत्वारो वन्द्याः । कतमे चत्वारो वन्द्याः । सदेवकस्य तावल्लोकस्य समारकस्य सब्रह्मकस्य सश्रमणब्राह्मणिकाया [प्रजा]याः सदेवमानुषायास्तथागतार्हत्सम्यक्संबुद्धो वन्द्यः । सर्वेषां गृहिणः प्रव्रजिता वन्द्याः । सर्वेषामुपसंपन्नानां पूर्वोपसंपन्ना वन्द्याः स्थापयित्वा भिक्षुणीम् । तस्या वर्षशतोपसंपन्नाया अपि तद्दहः उपसंपन्नो भिक्षुर्वन्द्यः सर्वस्योपसंपन्नको वन्द्यः ।

दशावन्द्याः । कतमे । पारिवासिको मूलपारिवासिकः पर्युषितपरिवासः मानाप्यचारिकश्चरितमानाप्योऽदर्शनायोत्क्षिप्तकः अप्रतिकर्मायोत्क्षिप्तकः अप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षिप्तकः स चो गृही चानुपसंपन्नः ।

यदा भगवता यथावृद्धिकया प्रज्ञप्तास्तदा भिक्षवोऽन्योन्यं सत्कुर्वन्ति गुरुकुर्वन्ति मानयन्ति पूजयन्ति । तेऽन्योन्यं सत्कुर्वन्तो मानयन्तः पूजयन्तो वर्धन्ते कुशलैर्धर्मैरुत्पलं वा

1 Tib. 308b, l. 6: དབྱར་ ཐུང་ ངུ་དང །=ह्रस्ववार्षिकम् ।

2 Cf. Cuḷlavagga, vi, 6.

यथोदके। भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। पश्य भदन्त यदा भगवता यथावृद्धिकया प्रज्ञप्तास्तदा भिक्षवोऽन्योन्यं सत्कुर्वन्ति गुरुकुर्वन्ति मानयन्ति पूजयन्ति। तेऽन्योन्यं सत्कुर्वन्तो गुरुकुर्वन्तो मानयन्तः पूजयन्तो वर्धन्ते कुशलैर्धर्मैरुत्पलं वा यथोदके इति। भगवानाह। किमत्र भिक्षवः आश्चर्यं यदिदानीं मया विगतरागेण विगतद्वेषेण विगतमोहेन परिमुक्तेन जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैः सर्वज्ञेन सर्वाकारज्ञेन सर्वज्ञानज्ञेयवशिप्राप्तेन यथावृद्धिकायां प्रज्ञप्तायां यथावृद्धिकामागम्य. भिक्षवोऽन्योन्यं सत्कुर्वन्ति गुरुकुर्वन्ति पूर्ववद्यावदुत्पलं वा यथोदके इति। यत्तु मया सरागेण सद्वेषेण समोहेनापरिमुक्तेन जातिजराव्याधि-मरण-शोक-परिदेव-दुःख-दौर्मनस्योपायासैर्विनिपतितशरीरेण यथावृद्धिकायां प्रज्ञप्तायां यथावृद्धिकामागम्य सकलो जम्बूद्वीपनिवासी जनकायो यद्भूयसा प्रणीते त्रयस्त्रिंशे देवनिकाये उपपन्नस्तच्छ्रूयताम्।

भूतपूर्वं[1] भिक्षवः काशीषु जनपदे अन्यतमस्मिन्वनगहने चत्वारः प्राणिनः प्रतिवसन्ति कपिञ्जलः शशो मर्कटो गजाश्चः। ते च परस्परं सख्येनावस्थिताः सहिताः समग्राः संमोदमाना अविवदमाना अशंकिनो यथेष्टविहारतया कालमतिनामयन्ति। यावदपरेण समयेन तेषां बुद्धिरुत्पन्ना।

1 Cf. Cullavagga, vi, 6.

अस्ति वयं भवन्तः परस्परं सख्येनावस्थिताः सहिताः समग्राः संमोदमाना अविवदमानाः। किन्तु न जानीमः कोऽस्माभिः सत्कर्तव्यो गुरुकर्तव्यो मानयितव्यः पूजयितव्य इति। यत्तु वयं यथावृद्धिकां प्रज्ञपयेम इति। ते परस्परं संजल्पं कर्तुमारब्धा इति। कोऽस्माकं वृद्ध इति। ततः कपिंजलेन वटवृक्षो दर्शितः। भवन्तः एष वटवृक्षः केन कियत्प्रमाणो दृष्ट इति। हस्ती कथयति। मया यूथेन सहानेन पथा गच्छता अयं दृष्टो मत्प्रमाण एव उच्चत्वेनेति। मर्कटः कथयति। मया यूथेन सहानेन पथा गच्छता अयं दृष्टो मम तुल्य एवोच्चत्वेनेति। ते कथयन्ति। त्वमस्य वृद्ध इति। शशः कथयति। मयाप्यस्य द्विपत्रकस्य पत्रेष्वेवावश्यायबिन्दवो जिह्वया निर्लीढा इति। ते कथयन्ति। त्वमप्यनयोर्वृद्ध इति। कपिञ्जलः कथयति। पश्यत यूयमेनं वटवृक्षं महत्प्रमाणाकारम्। ते कथयन्ति। पश्यामः। एतस्मान्मया फलानि भक्षयित्वास्मिन्प्रदेशे उच्चारः कृतस्तस्मादयं जात इति। ते कथयन्ति। यद्येवं त्वमस्माकं सर्वेषां वृद्ध इति। ततो हस्ती सर्वेषां सत्कर्तुमारब्धः। मर्कटः शशः कपिंजलं च। शशः कपिंजलमेव। ते एवं यथावृद्धिकया सत्कुर्वन्तस्तस्मिन्वनगहने इतश्चामुतश्च परिभ्रमन्ति। यदा विषमनिम्नाः प्रदेशा गन्तव्या भवन्ति तदा हस्तिनं मर्कटोऽभिरोहति मर्कटं शशः शशमपि कपिंजलः।

तेषामेवं प्रवृद्धस्नेहानां सगौरवाणां च बुद्धिरुत्पन्ना। अस्ति वयं भवन्तः प्रवृद्धस्नेहाः सगौरवाश्च। अन्यदपि

तावत्किंचित्कुशलं समादाय वर्तेमहीति। किं कुर्मः। कपिंजलः कथयति। प्राणातिपातात्प्रतिविरमामः। कीदृशोऽस्माकं प्राणातिपातः। कपिंजलः कथयति। सन्ति तृणपुष्पफलानि सप्राणकानि सन्ति निष्प्राणकानि। तदस्माभिरद्याग्रेण सप्राणकानि परित्यज्य निष्प्राणकानि परिभोक्तव्यानि। ते सप्राणकानि परित्यज्य निष्प्राणकानि परिभोक्तुमारब्धाः।

तेषामेतदभवत्। अस्ति वयं प्राणातिपातात्प्रतिविरता नो त्वदत्तादानात्प्रतिविरमामः। कीदृशोऽस्माकमदत्तादानम्। कपिंजलः कथयति। सन्ति सपरिग्रहाणि तृणपत्रपुष्पफलानि सन्ति निष्परिग्रहाणि। तदस्माभिरद्याग्रेण सपरिग्रहाणि परित्यज्य निष्परिग्रहाणि परिभोक्तव्यानि। ते सपरिग्रहाणि परित्यज्य निष्परिग्रहाणि [परि]भोक्तुमारब्धाः।

तेषामेतदभवत्। अस्ति वयमदत्तादानात्प्रतिविरताः। नो तु काममिथ्याचारात्। यन्नु वयं काममिथ्याचारात् प्रतिविरमामः। कीदृशोऽस्माकं काममिथ्याचारः। कपिंजलः कथयति। वयं गम्या अपि गच्छामः। अगम्या अपि गच्छामः। तदस्माभिरद्याग्रेण गम्यैव गन्तव्या नागम्या। ते गम्यां गच्छन्ति नागम्याम्।

तेषामेतदभवत्। अस्ति वयं काममिथ्याचारात्प्रतिविरताः। नो तु मृषावादात्। यन्नु वयं मृषावादात्प्रतिविरमामः। कीदृशोऽस्माकं मृषावादः। कपिंजलः कथयति। वयं यद्वा तद्वा विप्रलपामः। तदस्माभिरद्याग्रेण न यद्वा तद्वा विप्रलपितव्यम्।

विचार्य विचार्य काले वागुदीरयितव्या। ते न यद्वा तद्वा [वि]-प्रलपन्ति किंतु विचार्य विचार्य कालेन वागुदीरयन्ति।

तेषामेतदभवत्। अस्ति वयं मृषावादात्प्रतिविरताः। नो तु सुरामैरेयमद्यप्रमादस्थानात्प्रतिविरताः। यन्नु वयं सुरामैरेयमद्य-प्रमादस्थानात्प्रतिविरमामः। कीदृशमस्माकं सुरामैरयमद्यप्रमाद-स्थानम्। कपिंजलः कथयति। सन्ति मादनीयानि फलानि सन्त्यमादनीयानि। तदस्माभिरद्याग्रेण मादनीयानि फलानि परि-त्यज्यामादनीयानि फलानि परिभोक्तव्यानि। ते मादनीयानि फलानि परित्यज्यामादनीयानि फलानि परिभोक्तुमारब्धाः।

यदा ते पंचसु व्रतपदेषु प्रतिष्ठापितास्तदा कपिंजलः कथ-यति। अस्ति वयं भवन्तः पंचसु व्रतपदेषु प्रतिष्ठिताः। यन्नु वयमन्यानपि पंचसु व्रतपदेषु प्रतिष्ठापयामः। तदा कपिं-जलः कथयति। अस्ति वयं भवन्तः पंचसु व्रतपदेषु प्रतिष्ठिताः। यन्नु वयमन्यानपि पंचसु व्रतपदेषु प्रतिष्ठापयामः। ते कथयन्ति। एवं कुर्मः। को युष्माकं प्रतिष्ठापयति। मर्कटः कथयति। अहं सर्वान् शाखामृगान्प्रतिष्ठापयामि। ततः शशः कथयति। अहं सर्वान् शशान् लोमशान् मृगांश्च प्रतिष्ठाप-यामि। हस्ती कथयति। अहं सर्वान्हस्तिनः सिंहान् व्याघ्रद्वीपिनश्च प्रतिष्ठापयामि। कपिंजलः कथयति। यद्येवमेतत्तु संक्षेपय[1] युष्माकमविनीया अपदा द्विपदाश्चतुष्पदाः पक्षिणश्च। तानहं सर्वान् पञ्चसु व्रतपदेषु प्रतिष्ठापयामीति। ततस्ते काशीविषये

1 Tib. 312b, l. 6. མདོར་ན་ཁྱེད་ཀྱིས་འདུལ་བ་མ་ཡིན།

यावत्तिर्यग्योनिगताः प्राणिनस्ते सर्वे पञ्चसु व्रतपदेषु प्रतिष्ठापिताः । ते अन्योन्यमव्याबाधमानास्तस्मिन्वनषण्डे संप्रजानविहारिणो यथेष्टं विहरन्ति । तेषामनुभावाद्देवः कालवर्षी संवृत्तः । सदा पुष्पफला वृक्षाः शस्यवती वसुमती । तैर्मनुष्यैर्दृष्टा अन्योन्यमव्याबाधमाना विहरन्तः । सदा पुष्पफला वृक्षाः शस्यवती वसुमती । राजा कथयति । अहं धर्मेण राज्यं कारयामि ममैषोऽनुभाव इति । अन्तःपुरं कुमारामात्या भटबलाग्रं नैगमजानपदाश्च । राजा संलक्षयति । सर्व एते कथयन्ति । ममानुभावो ममानुभाव इति । तन्न ज्ञायते कस्यानुभाव इति । स कुतूहलजातो नैमित्तिकानाहूय पृष्टवान् । तैरपि न ज्ञातम् । यावद्वाराणस्यां नातिदूरे उद्यानम् । तत्र पञ्चाभिज्ञ ऋषिः प्रतिवसति सकलस्य वाराणसीनिवासिनो जनकायस्य पूज्यो मान्योऽभिवाद्यश्च । ततो राजा तस्य ऋषेः सकाशमुपसंक्रान्तः पादयोर्निपत्य कथयति । महर्षे मम विजिते यावत्तिर्यग्योनिगताः प्राणिनस्ते सर्वे अन्योन्यमव्याबाधमानाः संप्रजानविहारिणो यथेष्टं विहरन्ति । देवः कालवर्षी सदा पुष्पफला वृक्षाः शस्यवती च वसुमती । तस्मान्ममैतदभवत् । अहं धर्मेण राज्यं कारयामि । ममैषोऽनुभाव इति । अन्तःपुरं कुमारामात्या भटबलाग्रं नैगमजानपदाश्च संलक्षयन्ति । अस्मा[क]मेषोऽनुभाव इति । तन्न ज्ञायते कस्यायमनुभाव इति । कौतुकश्च मे महान् । त्वमर्हसि संशयं छेत्तुम् । कस्यायमनुभाव इति । स कथयति । महाराज न तवैषोऽनुभावो नान्तःपुरस्य न कुमाराणां नामात्यानां न भटबलाग्रस्य न

नैगमजानपदानाम्। तु तव विजिते चत्वारः प्राणिनः प्रतिवसन्ति। तेषामयमनुभाव इति। राजा कथयति। गच्छामि तान् पश्यामीति। ऋषिः कथयति। महाराज किं तव तैर्दृष्टैरपि तु यत्ते समादाय वर्तन्ते तत्समादाय वर्तस्वेति। किं ते समादायं वर्तन्ते। पञ्च व्रतपदानि। महर्षे कीदृशानि पञ्च व्रतपदानि। महाराज ते प्राणिनं जीवितान्न व्यवरोपयन्ति। परस्वं नापहरन्ति। अगम्यागमनं न कुर्वन्ति। मृषावादं न भाषन्ते। मद्यपानं च नाध्याचरन्ति। राजा कथयति। महर्षे यद्येवमहमप्येतानि पञ्च व्रतपदानि समादाय वर्तेम। अथ स राजा पञ्च व्रतपदानि समादाय वर्तितुमारब्धः। राजा पञ्च व्रतपदानि समादाय वर्तत इति देव्योऽपि पञ्च व्रतपदानि समादाय वर्तितुमारब्धाः। कुमारा अमात्या भटबलाग्रं नैगमजानपदा अपि पञ्च व्रतपदानि समादाय वर्तितुमारब्धानि। प्रातिसीमैः कोट्टराजभिः श्रुतम्। राजा ब्रह्मदत्तः पञ्च व्रतपदानि समादाय वर्तते सार्धमन्तःपुरेण कुमारैरमात्यैर्भटबलाग्रैर्नैगमजानपदैरिति। श्रुत्वा च पुनस्तेऽपि पञ्च व्रतपदानि समादाय वर्तितुमारब्धाः सार्धमन्तःपुरेण कुमारैरमात्यैर्भटबलाग्रैर्नैगमजानपदैरिति। भूयसा सर्व एव जनकायः पञ्च व्रतपदानि समादाय वर्तितुमारब्धः।

तेन खलु समयेन जम्बूद्वीपे यः कालं करोति स कायस्य भेद्रात्प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपद्यते। ततः शक्रो देवेन्द्रः आपूर्यमाणं देवपर्षदं दृष्ट्वा च पुनर्गाथां भाषते।

सगौरवाः सप्रतीशा विहरन्ति तयोर्वने ।
कपिञ्जलं ब्रह्मचर्यं पृथग्लोकप्रकाशितम् ॥ इति ।

भगवानाह । किं मन्यध्वे भिक्षवो योऽसौ कपिञ्जलः अहमेव सः । तेन कालेन तेन समयेन शशः शारिपुत्रो भिक्षुर्मर्कटो मौद्गल्यायनो भिक्षुर्गज आनन्दः । तदापि मया यथावृद्धिकायां यथाप्रज्ञप्तायां यथावृद्धिकामागम्य सकलो जम्बूद्वीपनिवासी जनकायो भूयसा त्रयस्त्रिंशे देवनिकाये उपपन्नः । एतर्ह्यपि मया यथावृद्धिकायां [यथा]प्रज्ञप्तायां यथावृद्धिकामागम्य भिक्षवोऽन्योन्यं सत्कुर्वन्तो गुरुकुर्वन्तो मानयन्तः पूजयन्तो वर्धन्ते कुशलैर्धर्मैरुत्पलं वा यथोदके । तस्मात्तर्हि भिक्षवः सगौरवा विहरत सप्रतीशाः सभयवशवर्तिनः सब्रह्मचारिषु स्थविरेषु मध्येषु नवकेषु । तत्कस्य हेतोः । स तावद्भिक्षवो भिक्षुरगौरवो विहरन्नप्रतीशः अभयवशवर्ती स्थविरेषु मध्येषु नवकेषु आसमुदाचारिकान् धर्मान् परिपूरयिष्यति नेदं स्थानं विद्यते । आसमुदाचारिकान् धर्मानपरिपूर्य शैक्षान् धर्मान् परिपूरयिष्यति नेदं स्थानं विद्यते । शैक्षान्धर्मानपरिपूर्य शीलस्कन्धं समाधिस्कन्धं प्रज्ञास्कन्धं विमुक्तिस्कन्धं विमुक्तिज्ञानदर्शनस्कन्धं परिपूरयिष्यति नेदं स्थानं विद्यते । विमुक्तिज्ञानदर्शनस्कन्धमपरिपूर्यानुपादाय परिनिर्वास्यति नेदं स्थानं विद्यते । स तावद्भिक्षवो भिक्षुः सगौरवो विहरन् सप्रतीशः सभयवशवर्ती सब्रह्मचारिषु स्थविरेषु मध्येषु नवकेषु आसमुदाचारिकान् धर्मान् पूरयिष्यति

1 Tib. 315b, l. 3 འཇིགས་པའི་དབང་དུ་འགྱོ་བ་དང་བཅས་པས །

स्थानमेतद्विद्यते। आसमुदाचारिकान् धर्मान् परिपूर्य शैक्षान् धर्मान् परिपूरयिष्यति स्थानमेतद्विद्यते। शैक्षान् धर्मान् परिपूर्य शीलस्कन्धं समाधिस्कन्धं प्रज्ञास्कन्धं विमुक्तिस्कन्धं विमुक्तिज्ञानदर्शनस्कन्धं परिपूरयिष्यति स्थानमेतद्विद्यते। विमुक्तिज्ञानदर्शनस्कन्धं परिपूर्यानुपादाय परिनिर्वास्यति स्थानमेतद्विद्यते। तस्मात्तर्हि भिक्षव एवं शिक्षितव्यम्। यत्सगौरवा विहरिष्यामः सप्रतीशाः सभयवशवर्तिनः [सब्रह्मचारिषु] स्थविरेषु मध्येषु नवकेषु। इत्येवं वो भिक्षवः शिक्षितव्यम्।

यदा भगवतः पञ्चका. विनीतास्ते अरण्ये प्रतिवसन्ति[1]। ते अरण्ये प्रतिवसन्तोऽगम्या भवन्ति सिंहानां व्याघ्रानां द्वीपिनां तरक्षूणाम्।

भगवान् संलक्षयति। कुत्र पूर्वकाणां सम्यक्संबुद्धानां श्रावकावासं कल्पितवन्तः। पश्यति विहारे। देवताभिरप्येवं भगवत आरोचितम्।

तेन खलु समयेन वाराणस्यां कल्याणभद्रो नाम गृहपतिः प्रतिवसति। तस्य कुशलमूलप्रतिबोधितसन्ततेरेतदभवत्। अहो बताहं भगवतः श्रावकाणां विहारं कारयेयमिति। स काल्यमेवोत्थाय येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्तनिषण्णं कल्याणभद्रिकं गृहपतिं भगवान्धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति। अनेकपर्यायेण धर्म्यया कथया संदर्श्य

1 See Tib 316a, l 2.

समादाप्य संमुत्तेज्य संप्रहर्ष्य तूष्णीम् । अथ कल्याणभाद्रको गृहपतिरुत्थायासनादेकांसमुत्तरासंगं कृत्वा येन भगवांस्तेनांजलिं प्रणम्य भगवन्तमिदमवोचत् । यदि भगवाननुजानीयादहं भगवतः श्रावकाणां विहारं कारयेयमिति । भगवानाह । तस्माद् गृहपते अनुजानामि कारय इति । स न जानीते कीदृशः कारयितव्य इति । भगवानाह । यदि त्रिलयनं[1] कारयसि मध्ये गन्धकुटिः कारयितव्या द्वयोः पार्श्वयोर्द्वे लयने । एवं त्रिशाले नव लयनानि । चतुःशाले मध्ये द्वारकोष्ठकाभिमुखं गन्धकुटिः । द्वारकोष्ठकपार्श्वयोर्द्वे लयने[2] । स न जानीते कतिपुराः[3] कर्तव्या इति । भगवानाह । भिक्षूणां पंचपुरा विहाराः कर्तव्याः । सप्तपुरा गन्धकुटिः । सप्तपुरा बालाग्रपूतिकाः[4] । भिक्षुणीनां तु त्रिपुरा विहाराः कर्तव्याः । पंचपुरा गन्धकुटिः । पंचपुरा बालाग्रपूतिका इति ।

तेन खलु समयेन श्रावस्त्यां दत्तो नाम गृहपतिः प्रतिवसति आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुद्यतो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रम-

1 Ms तूलयनं

2 Tib 316b, l 7: ངོས་ བཞི་ པ་ལ་ནི་ དྲི་གཙང་ ཁང་གི་ སྒོ་ཁ་ དབུས་ སུ་ སྒོ་ཁང་ འདོད་ པར་བྱ་ ཞིང་ གཡོས་ ཕྱོགས་སུ་ གནས་ ཁང་ གཉིས་སོ། 3 Ibid དུ་ རྩེག་དུ །

4 Tib. 317a, l 1-2 སྒོ་ཁང་ སྟེང་ གི་ བསིལ་ ཁང་ ཡང་ བདུན་ བརྩེག་ དུ་ བྱའོ།

माणस्य परिचारयतः कालान्तरेण पत्नी आपन्नसत्त्वा संवृत्ता। सा चाष्टानां वा नवानां वा मासानामत्ययात्प्रसूता। दारको जातः। तस्य त्रीणि सप्तकान्येकविंशतिदिवसान्विस्तरेण जातस्य जातिमहं कृत्वा नामधेयं व्यवस्थाप्यते। किं भवतु दारकस्य नामेति। ज्ञातय ऊचुः। अयं दारको दत्तस्य गृहपतेः पुत्रस्तस्माद्भवतु दारकस्य सुदत्त इति नामेति। तस्य सुदत्त इति नामधेयं व्यवस्थापितम्। सुदत्तो दारकोऽष्टाभ्यो धात्रीभ्यो दत्तः। द्वाभ्यामंसधात्रीभ्याम्। द्वाभ्यां क्षीरधात्रीभ्याम्। द्वाभ्यां मलधात्रीभ्याम्। द्वाभ्यां क्रीडनकाभ्यां धात्रीभ्याम्। सोऽष्टाभिर्धात्रीभिरुन्नीयते वर्धते क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिर्मण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पंकजम्। सोऽपरेण समयेन सर्वालंकारविभूषितो धात्र्यंसगतो निषण्णो बहिर्निर्गतः। याचनकेनालंकारं प्रार्थितः। कुमाराहमलंकारेणार्थी। प्रयच्छ मे अलङ्कारमिति। तेन प्रमुदितमनसा असावलंकारो दत्तः। स गृहं प्रविष्टः। पित्रा चास्य धात्री पृष्टा। कुत्र कुमारस्यालंकार इति। सा कथयति। दत्तः कुमारेण याचनकायेति। सोऽन्येनालंकारेण विभूषितः। सोऽपि दत्तः। भूयोऽप्यलंकृतः। सोऽपि तेन दत्तः। स गृहपतिः पत्नीमामन्त्रयते। भद्रे शोभनोऽस्माकं पुत्रो जातः। नित्यं दानाभिरत इति। सा कथयति आर्यपुत्र यद्येवं नैनं भूयोऽप्यलंकरिष्यामि। स कथयति। भद्रे अस्त्यस्माकं सुवर्णमप्रमेयं रत्नानि च। किन्तु अलंकारघटका न सन्ति। सर्वथा नायं बहिर्निष्कासयितव्य इति। सोऽभ्यन्तर एव लाड्यते। यावदपरेण समयेन सुदत्तो गृहपतिर्भृत्यजनपरिवृतो

नदीमजिरवतीं स्नातुं संप्रस्थितः। सुदत्तो दारकः कथयति। तात अहमपि गच्छामीति। स तं विप्रलम्भयितुमारब्धः। पुत्र इहैव शोभनं सलिलम्। नदी ग्राहाकुला। इयं ते धात्री स्नापयिष्यतीति। स रोदितुं प्रवृत्तः। मातास्य कथयति। आर्यपुत्र किमर्थमयं दारको रौतीति। तेन यथावृत्तं समाख्यातम्। सा कथयति। आर्यपुत्र त्वया सार्धं गच्छतु। कोऽत्र विरोधः। सुतरां गुप्तो भविष्यतीति। स तमादाय नदीं गतः। स्नापयित्वा कूले स्थापितः कथयति। तात किमर्थं मम रक्षा क्रियते। पुत्र तव दोषोऽस्ति। कथम्। दत्तमलंकारं याचनकेभ्योऽनुप्रयच्छसि। किं तातो द्रव्येणार्थी पुत्रके नार्थी। तात यद्येवमवतारय माम्। स तेनावतारितः। ततस्तेनोभौ पाणी नद्यामाप्लाव्य सुवर्णपूर्णाश्चत्वारो लोहसंघाटा उद्धृताः। कथयति तात अतस्त्वं यावदीप्सधनेन धनकार्यं कृत्वावशिष्टमत्रैव प्लावय। पुत्र किं त्वं जलगतान्निधीन् पश्यसि। तात न केवलं जलगतान् स्थलगतानपि सस्वामिकानस्वामिकानपि येऽपि दूरे येऽप्यन्तिके। दत्तो गृहपतिर्विस्मयोत्फुल्ललोचनः संलक्षयति। सत्यमेवंविधेन दानपतिना दानं दातुमिति विदित्वा कथयति। पुत्र यद्येवं देहि दानं यथेष्टमिति। धर्मता ह्येषा। न तावत्पुत्रो यशस्वी भवति यावदस्य पिता जीवतीति।

यावदपरेण समयेन दत्तो गृहपतिः कालगतः। सुदत्तो गृहस्वामी संवृत्तः। सततमनाथेभ्यः पिण्डकमनुप्रयच्छतीति समन्ताच्छब्दो विश्रुतः। दत्तस्य गृहपतेः पुत्रः सुदत्तो गृहस्वामी संवृत्तः। सोऽनाथेभ्यः पिण्डकमनुप्रयच्छतीति। तस्यानाथपिण्डदो

गृहपतिरिति संज्ञा संवृत्ता। ततस्तेन सदृशात्कुलात्कलत्रमानीनीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातः। एवं यावत्सप्त पुत्रा जाताः। तेन षण्णां निवेशः कृतः। सप्तमः सुजातो नाम्ना। तस्य सदृशं कुलं समन्वेषते। न आरागयति। स करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः। तस्य मधुस्कन्धो नाम मानवो वयस्यः। तेनासौ दृष्टस्तथा चिन्तापरः। स कथयति। कस्मात्त्वं गृहपते करे कपोलं दत्त्वा चिन्तापरस्तिष्ठसीति। स कथयति। मया षण्णां पुत्राणां निवेशः कृतः। सप्तमस्य सुजातस्य सदृशाकुलं चिन्तयामि कतरतत्कुलं यतोऽस्य निवेशं करिष्यामीति। स कथयति। अल्पोत्सुकस्तिष्ठ अहमस्य सदृशं कुलं गवेषयामि। कतरस्मिंन्देशे। स कथयति। मगधविषयं तावद्गच्छामि। एवं कुरु। स राजगृहं गतः। राजगृहे अन्यतमो गृहपतिराढ्यो महाधनो महाभोगोऽनाथपिण्डदस्य प्रतिरूपः। स तस्य गृहं प्रविष्टो द्वारशालायां स्थित्वा कथयति। स्वस्ति स्वस्तीति। तस्य गृहजनाः कथयन्ति। ब्राह्मण किं प्रार्थयसि। कन्याभिक्षाम्। कस्यार्थाय। श्रावस्त्यामनाथपिण्डदो गृहपतिस्तस्य पुत्रः सुजातो नाम्ना। ते कथयन्ति। सदृशोऽस्माकं कुलेन। अपि तु प्रभूतमस्माकं कुलशुल्कम्। कियत्प्रभूतम्। शतमश्वानां शतं निष्काणां शतमश्वतरीरथानां शतं काम्बोजिकानां कन्यानामिति[1]। मधुस्कधेन

1. Cf. Cullavagga, vi. 4·

Satam hatthī satam assā satam assatarīrathā
satam kaññāsahassānı āmuttamanıkundalā
ekassa padavītıhārassa kalam nāgghantı solasim.

मानवेनानाथपिण्डदस्य गृहपतेरनेनार्थेन लेखो दत्तः। तेनापि वाचयित्वा प्रतीच्छ सर्वं मया देयमिति। तेन दिवसमुहूर्तयोगेन प्रतीष्टम्।

ततस्तैः शुचिना प्रणीतेन प्रभूतेनाहारेण संतर्पितो मानवकः शालां गत्वा वासमुपगतो विषूचितः। अपरिचितो ब्राह्मणः। स तैरशुचिभयाद्बहिर्निष्कासयित्वा च्छोरितः। दैवादायुष्मन्तौ शारिपुत्रमौद्गल्यायनौ तं प्रदेशमागतौ। स ताभ्यां दृष्टः। ततस्ताभ्यां वंशविदलिकया निर्लिख्य पाण्डुमृत्तिकया उद्वर्त्य स्नापितः[1]। तस्यैव धर्मं देशयित्वा प्रक्रान्तौ। तस्य प्रवाहिका नावतिष्ठते। स तयोरन्तिके चित्तमभिप्रसाद्य कालंगतः। चातुर्महाराजिकेषु देवेषूपपन्नः। स वैश्रवणस्य महाराजस्य सकाशं गत्वा भवनं प्रार्थयते। स कंथयति। गच्छ तदेव ते शिंविकद्वारं भवनमिति। स तत्र गत्वा नैवासिकः संवृत्तः।

विदेहराजेन राज्ञो बिंबिसारस्य हैमवतानां नागानां शतमनुप्रेषितम्। तेन राज्ञा प्रसेनजितः कोसलस्य सन्दिष्टम्। मम विदेहराजेन हैमवतानां नागानां शतमनुप्रेषितम्। यद्यर्थी भवसि प्रेषय इति।

अनाथपिण्डदो गृहपतिर्येन राजा प्रसेनजित्कोसलस्तेनोपसंक्रान्तः। उपसंक्रम्य राजानं प्रसेनजितं कोसलमिदमवोचत्। देव मम राजगृहे किंचित्प्रयोजनम्। तत्र गत्वा आगमिष्यामीति। राजा कथयति। शोभनं गच्छ ममापि तस्मात् हस्तिशतमानेयं

1 Cf Gilgit Mss., Vol. III, pt 2, p. 129.

तदानेष्यसीति। स कथयति। देव यदि मम तत्र प्रयोजनं भवति ग्रहीष्यामीति। इहागत्य देवस्य चित्तग्राहं करिष्यामीति। राजा कथयति। शोभनमेवं भवत्विति। ततोऽनाथपिण्डदो गृहपतिः प्रभूतं कुलशुल्कमादाय राजगृहं गतः। स यस्य गृहपतेर्गृहे वासमुपगतः स गृहपतिः सरात्रमेवोत्थायान्तर्जनमामंत्रयते। उत्तिष्ठार्या उत्तिष्ठ। भद्रमुखाः काष्ठानि पाटयत। समितिं प्रज्वालयत। भक्तं पचत। सूपिकं पचत। खाद्यकान्युल्लाड्यत। प्रतिजाग्रत मण्डलवाटमिति। अथानाथपिण्डदस्य गृहपतेरेतदभवत्। किं पुनरस्य गृहपतेरावाहो वा विवाहो वा भविष्यति। राष्ट्रं वानेन भक्तेनोपनिमंत्रितम्। श्रेणी वा पूगो वा पर्षदो वा राजा वानेन मागधश्रेण्यो बिंबिसारो भक्तेनोपनिमंत्रित इति विदित्वा तं गृहपतिमिदमवोचत्। किं पुनस्ते गृहपते आवाहो वा भविष्यति विवाहो वा राष्ट्रं वा त्वया भक्तेनोपनिमंत्रितं श्रेणी वा पूगो वा पर्षदो वा राजा वा ते मागधश्रेण्यो बिंबिसारो भक्तेनोपनिमंत्रित इति। स कथयति। गृहपते न मे आवाहो भविष्यति न विवाहो वा नापि मया राष्ट्रं भक्तेनोपनिमंत्रितम्। न श्रेणी न पूगो न पर्षदो नापि राजा मागधश्रेण्यो बिंबिसारो भक्तेनोपनिमंत्रितः। अपि तु बुद्धप्रमुखो भिक्षुसंघो भक्तेनोपनिमंत्रित इति।

अनाथपिण्डदस्य गृहपतेर्बुद्ध इत्यश्रुतपूर्वं घोषं श्रुत्वा सर्वरोमकूपान्याहृष्टानि। स आहृष्टरोमकूपस्तं गृहपतिमिदमवोचत्। क एष गृहपते बुद्धो नाम। अस्ति गृहपते श्रमणो गौतमः शाक्य-

पुत्रः शाक्यकुलात्केशश्मश्रूण्यवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया आगारादनागारिकं प्रव्रजितः सोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः। स एष गृहपते बुद्धो नाम। क एष गृहपते संघो नाम। सन्ति गृहपते क्षत्रियकुलादपि कुल-पुत्राः केशश्मश्रूण्यवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया तमेव भगवन्तं प्रव्रजितमनुप्रव्रजिताः। ब्राह्मणकुलादपि वैश्यकुलादपि शूद्रकुलादपि कुलपुत्राः केशश्मश्रूण्यवतार्य काषा-याणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया आगारादनागारिकं तमेव प्रव्रजितमनुप्रव्रजिताः। स एष गृहपते संघो नाम। स मया बुद्धप्रमुखो भिक्षुसंघोऽन्तर्गृहे भक्तेनोपनिमन्त्रितः। कुत्र गृहपते स भगवानेतर्हि विहरति। अस्मिन्नेव राजगृहे शीतवने श्मशाने। लभ्यं गृहपते सोऽस्माभिर्भगवान् द्रष्टुम्। तेन हि गृहपते आगमय[स्व] तावत्त्वम्। स्थानमेतद्विद्यते यदिहागतं श्वो द्रक्ष्यसि। अनाथपिण्डदो गृहपतिस्तां रात्रिं बुद्धालम्बनया स्मृत्या मिद्धमवक्रान्तः। सोऽप्रभाते प्रभातसंज्ञी येन शिविकद्वारं[1] तेनोप-संक्रान्तः। तेन खलु समयेन शिविकद्वारं रात्र्यां द्वौ यामौ विवृतं तिष्ठति पूर्वकं पश्चिमकं चेति। मा हैवागन्तुकानां गमिकानां च दूतानां विघ्नो भविष्यतीति। यावत्पश्यति शिविकद्वारं विवृतमालोकेन च स्फुटं तस्यैतदभवत्। नूनं प्रभाता रजनी। तथापि शिविकद्वारं विवृतं तिष्ठतीति विदित्वा तेनैवालोकेन नगरान्निष्क्रान्तः। समनन्तरनिष्क्रान्तस्य चास्य य आलोकः

1 Tib. 321b, l. 7. ཧྲུལ་ སྒོ།

सोऽन्तर्हितोऽन्धकारं प्रादुर्भूतम्। तस्माद्भयमभूत् स्तम्भितमभूद् रोमहर्षः। मा हैव कश्चिद्विहेठयेन्मनुष्यो वा अमनुष्यो वा धूर्तको वा असंप्राप्त चास्मात्प्रभूतं कुलशुक्रमिति विदित्वा प्रतिनिवर्तितुकामो मधुस्कन्धस्य देवपुत्रस्य स्थण्डिलं[1] प्रदक्षिणीकरोति नमस्करोति च। अथ मधुस्कन्धस्य देवपुत्रस्यैतदभवत्। अद्यैवानाथपिण्डदेन गृहपतिना सत्यदर्शनं कर्तव्यम्। अद्यैवायं बुद्धं भगवन्तमपास्यान्यदेवता नमस्करिष्यतीति विदित्वा यावच्च शिविकद्वारं यावच्च शीतवनं श्मशानमत्रान्तरादुदारेणावभासेनावभास्य अनाथपिंडदं गृहपतिमिदमवोचत्। अभिक्राम गृहपते मा प्रतिक्राम। अभिक्रामतस्ते श्रेयो भविष्यति न प्रतिक्रामतः। तत्कस्य हेतोः[2]।

[शतमश्वाः सुवर्णालंकृताश्चाश्वतरीरथाः।
शतञ्च वाडवा रथा नानामणिविभूषिताः।
पदा विहारस्यैकस्य कलां नार्हन्ति षोडशीम्॥

अभिक्राम गृहपते मा प्रतिक्राम। अभिक्रामतस्ते श्रेयो भवति न प्रतिक्रामतः। तत् कस्य हेतोः।]

शतं हैमवता नागाः सुवर्णमणिकल्पिताः।
एषा दत्ता महाकाया व्यूढवन्तो महागजाः।
पदा विहारस्यैकस्य कलां नार्हन्ति षोडशीम्॥

1 Tib. 322a, l. 5. འདུག་ གནས །

2 The leaves of the original ms. after this (marked 218) are lost. One leaf with number 318 has been found elsewhere but on comparison of its contents with the Tib. translation, it appears that it should have been marked 219. This leaf, however, is damaged, and hardly half of its contents can be deciphered. The gaps have been filled up by restoration from Tibetan and indicated by box brackets.

अभिक्राम गृहपते मा प्रतिक्राम। अभिक्रामतस्ते श्रेयो भवति न प्रतिक्रामतः। तत्कस्य हेतोः।

शतं काम्बोजिका कन्या आमुक्तमणिकुण्डलाः।
सुवर्णकेयूरधरा निष्कग्रीवाः स्वलंकृताः।
पदा विहारस्यैकस्य कलां नार्हन्ति षोडशीम्॥

अभिक्राम गृहपते मा प्रतिक्राम। अभिक्रामतस्ते श्रेयो भवति न प्रतिक्रामतः[1]।

[अथानाथपिण्डदो गृहपतिर्देवपुत्रमिदमवोचत्। कस्त्वं भद्रमु]ख। अहमस्मि गृहपते मधुस्कन्धो नाम मानवस्तवैव पुराणो गृहसखा। सोऽहं शारिपुत्रमौ[द्गल्यायनयोरन्तिके चित्तमभिप्रसाद्य कालगतः। अतश्चातुर्महाराजिकेषु देवेषूपपन्नः इदं शिविकद्वारं च भवनमुपगतः। ततस्त्वमुक्तः। अभिक्राम] गृहपते मा प्रतिक्राम। अभिक्रामतस्ते श्रेयो भविष्यति न प्रतिक्रामत इति।

अथानाथपिण्डदस्य गृहपते[रेतदभवत् अहो बत बुद्धो भगवाननुत्तरः। धर्मोऽप्यनुत्तरः। तस्य देवोऽपि आतापयति आराग]यति विदित्वा येन शीतवनं श्मशानं तेनोपसंक्रान्तः। तेन खलु समयेन भगवान् बहिर्विहारस्याभ्यवकाशे चंक्रमे चंक्रम्यते यद्भूयसा[नाथपिण्डदस्य गृहपतेरागमनापेक्षया। अथानाथपिण्डदो दूरतो भगवन्तमपश्यत्। दृष्ट्वा च येन भगवान्] तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तं प्रतिसंमोदनया प्रति-

1 Tib. See 322b, 1 6.

संमोदते। कच्चिद् भगवन् सुखं शायित इति। अथ भगवां[स्तेन समयेन इमां गाथामभाषत।

सर्वदा वा सुखं शेते ब्राह्मणः परिनिर्वृतः।
यो न लिप्यति कामेषु शीतीभूतो निरुपधिः॥]
छित्त्वेह सर्वमासक्तिं विनीय हृदयज्वरम्।
उपशान्तः सुखं शेते शान्तिप्राप्तेन चेतसा॥

अथ भगवाननाथपिण्डदं गृहपतिं [विनीय विहारे निषण्णः। अनाथपिण्डदो गृहपतिर्भगवतः पादौ शिरसा वन्दित्वा] एकान्ते निषण्णः। एकान्ते निषण्णमनाथपिण्डदं भगवान् धर्म्यया कथया सन्दर्शयति समादापयति समुत्तेजयति [संप्रहर्षयति। बुद्धो भगवान् तं धर्म्यकथामानुपूर्विकां कथयति तद्यथा दानकथां शीलकथां] स्वर्गकथां कामानामास्वादादीनवसंक्लेशव्यवदानं नैष्क्रम्यप्रविवेकानुशंसं व्यवदानपक्ष्यान् धर्मान् विस्तरेण संप्रकाशयति। यदा चैनं भगवान् प्र[जानीते शुद्धचित्तमुदग्रचित्तं विनिवरणचित्तं कल्यमलं सामुत्कर्षिकीं] धर्मदेशनामाज्ञातुं तदा यासौ बुद्धानां भगवतां सामुत्कर्षिकी धर्मदेशना तद्यथा दुःखं समुदयो निरोधो मार्गश्चत्वार्य्यसत्यानि विस्तरेण संप्रकाशयति। अथानाथपिण्ड[दस्य गृहपतेर्धर्माभिसमयोऽभूत। त]द्यथा दुःखं समुदयो निरोधो मार्गः। तद् यथा शुद्धं वस्त्रमपगतकालकं रंजनोपगं रंगे प्रक्षिप्तं सम्यगेव रङ्गं प्रतिगृह्णीयात् एवमेवानाथपिण्डदो गृहपतिस्तस्मिन्नेवासने निषण्ण[श्चतुरार्यसत्यमभिसमेति।

अथानाथपिण्डदो गृहपतिर्दृष्टधर्मा प्राप्तधर्मा विदितधर्मा

पर्यवगाढधर्मा तीर्णकांक्षस्तीर्णविचिकित्सोऽपरप्रत्ययोऽनन्यनयः शास्तुः शासने धर्मेषु वैशारद्यप्राप्त उत्थायासनादेकां[समुत्तरासंगं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्। अभिक्रान्तो भदन्त।] अभिक्रान्तो भदन्त। एषोऽहं भगवन्तं शरणं गच्छामि धर्मं च भिक्षुसंघं च। उपासकं मां धारयत्वद्याग्रेण यावज्जीवं प्राणोपेतं शरणगतमभिप्रसन्नम्।

अथ भग[वाननाथपिण्डदमिदमवोचत्। केन नाम्ना त्वमभिहितो] गृहपते। अहमस्मि भदन्त सु[दत्तः]। अपि त्वनाथेभ्यः पिण्डकमनुप्रयच्छामि ततो मामनाथपिण्डदो गृहपतिरिति जनः संजानीते। कुतोभूमिकस्त्वं गृहपते। अस्ति भदन्त प्राचीनेषु जन[पदेषु कोशलेषु श्रावस्ती नाम। तत्र मे संवासः।] भगवान् श्रावस्ती[मागच्छतु। अहं भगवन्तमु]पस्थास्यामि यावज्जीवं चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः सार्धं भिक्षुसङ्घेन। सन्ति गृहपते श्रावस्त्यां विहाराः। नो भदन्त। [गृहपते यत्र विहाराः सन्ति तत्रैव भिक्षूणां गन्तव्यं वस्तव्यं मन्यते। किं श्रावस्त्यां भगवान् नागमिष्यति भिक्षवश्च। आगन्तव्यमिति विचिन्त्य तत्र मया विहारो मापेतव्य इति। श्रावस्त्यां विहारा भविष्यन्ति भिक्षवश्चागन्तव्यं वस्तव्यं मन्यन्त इत्यधिवासयति भगवाननाथपिण्डदस्य गृहपतेस्तूष्णींभावेन।

[अथानाथपिण्डदो भगवतस्तूष्णींभावेनाधिवासनं विदित्वा भगवतः पादौ शिरसा वन्दित्वा] भगवतोऽन्तिकात् प्रक्रान्तः। ततोऽस्य यद्राजगृहे कृत्यं वा करणीयं तत्सर्वं कृत्वा परिप्राप्य

पुनर्येन भगवांस्तेनोपसंक्रान्तः। [उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा भगवन्तमिदमवोचत्।

भगवन् मम सहायकं भिक्षुमेकं प्रयच्छ। तेन सार्धमेव]-महं श्रावस्त्यां भगवतोऽर्थाय विहारं कारयामीति। भगवान् संलक्षयति। कतरस्य भिक्षोरनाथपिण्डदं गृहपतिं सपरिवारं [श्रावस्तीनिवासिनं च जनकायं समन्वाहर्तुं शक्यमिति विचिन्त्य भिक्षुं शारिपुत्रमामन्त्र]यते। समन्वाहर शारिपुत्रानाथपिण्डदं गृहपतिं सपरिवारं श्रावस्तीनिवासिनं च जनकायमिति। अधि-वासयत्यायुष्मान् [शारिपुत्रस्तूष्णींभावेन।

अथानाथपिण्डद आयुष्मतः शारिपुत्रस्य तूष्णींभावेनाधि-वासनं विदित्वा भगवतः पादौ साञ्जलिः प्रणम्य भगवतोऽन्तिकात् प्रक्रान्तः।

अथ] आयुष्मान् शारिपुत्रस्तस्या एव रात्रेरत्ययात् पूर्वाह्णे निवास्य पात्रचीवरमादाय राजगृहं पिण्डाय प्राविक्षत्। राजगृहं पिण्डाय चरित्वा [कृतकरणीयं कृत्वा पश्चाद्भक्तं शयनासनार्थाय पात्रचीवरमादाय प्र]क्रान्तः।

अथानाथपिण्डदो गृहपतिः प्रभूतं सम्बलमादाय एकैकरात्रि-दिवसेन श्रावस्तीमनुप्राप्तः। [श्रावस्त्यामप्रविश्य आरामत आरामं वनतो वनमुद्यानत उद्यानं चंक्रमणतश्चंक्रमणं पर्येषणां कृत्वेद मवोचत्। भगवतोऽर्थाय विहारमेवंरूपे] नातिदूरे नात्यासन्ने दिवाल्पाकीर्णे रात्रावल्पशब्दे[1]।

1 Tib 326b l. 1.

# INDEX


अग्र ६७
अग्रपिण्डपात ६३
अग्रासन ६३
अग्रोदक ६३
अघमूल ५४
अजयुद्ध १७
अजिरवती १३५
अदत्तादान १२७
अधर्म ७७
अधिकरण १
अधोदेश ६३
अर्धमास ३२,३३
अनध्याचार ८,६
अनन्यायतन ५४
अनभिरतिसंज्ञा ५४
अन्तराय ३१
अन्तरापत्ति २५,३१
अन्तःसीमा ७,६,१०,११
अन्तराकथा १२१
अन्तर्मार्ग १८
अन्तर्वर्ष २७,२८
अनागामिफल ५४
अनात्मसंज्ञा ५४
अनाथपिण्डद ५,१३५
अनित्यसंज्ञा ५४
अपगतकालक ७६
अपरिशुद्ध १०८
अप्रतिकूलसंज्ञा ५७-५८
अप्रतिरूपसंज्ञा ५४
अप्रमाद ५८
अभयवशवर्त्ती १३१
अभिवादन ८६,६६
अभीक्ष्ण ६,१०,११
अभीक्ष्णापत्तिक ११,१२
अभ्यवकाशिक १२२
अमात्य १२६
अम्बा २०
अमूलक ८८,१०६
अमूलिका १०६,११०
अरिष्ट ५,३०,३१,३२
अवकाश १०८
अवचनीय १०७
अववाद ६७,१०७
अवस्फण्डक २५,२५
अवस्फण्डित २४,२५,२६
अव्यक्त १८
अश्वक १५,१८,१८
अश्वतरीरथ १३६
अश्वपरीक्षा २०,२७
अश्वयुद्ध १७
अश्वहेषिक १६
अष्टविमोक्षध्यायी १२२
अस्थिसंज्ञा ५४
अर्हन् २७,२८
आकाश ५४
आकिञ्चन्य ५४
आगन्तुक १७
आगारिक १२३
आचारविपत्ति ७,६७
आजीवविपत्ति ७,६७

आदीनवसंज्ञा ५४
आधिकरणिक ५,६,९,१०
आनन्द १७,९४
आन्तरायिक ३० ३१
आपण २०
आपत्ति ५३
आपत्तिपर्यन्त ७२,७३
आभाषित १८
आरण्यक १२२
आरामिक २२
आवर्हण ५१
आवर्हितव्य ८८
आवास ९३
आव्रीढ़ ७४
आशीविष ५३
आसन ९३
आसमुदाचारिक ७
आस्रवक्षय ५४
आहार ५४
इन्द्रिय १८
इयन्त २१
उत्कचप्रकच ७,८,१०,११
उत्कुट्टक ९,१४
उत्क्षेपक ६७
उत्तर १९,२०,२१,२८
उत्तरासङ्ग २२
उदकप्रोतिक १८
उद्घाटक २०
उदायी ५,३२,३३
उदाली १०२
उद्दानगाथा ६१,१०७
उद्धार २०
उपक्रम १९
उपधिवारिक ९८
उपसेन २१
उपस्थानशाला १२१
उपसंपन्न १२३
उपसंहार ९९
उपार्धपारिवासिक ८६
उपार्धमानाप्यचारिक ८७
उपासक १८
उपेक्षा ५४
उभयसन्तति ६४
ऊरुपरिवर्त १६
ऋद्धिविषय ५४
ऋषभगर्जित १६
ऋषभयुद्ध १७
एकदेशकालक ७५
एडमूकसंघ ११६
एकासनिक १२२
ओसारणा ७,८,९,१०,११,१३
औदत्य १६
कन्याभिक्षा १३६
कपिञ्जल १२६
कर्म १६
कर्मकारक ९७
कर्मवाचना ६,७,१३
करुणा ५४
कलहकारक ५,६,९,१०
कल्याणभद्र १३२
कल्याणवाक्करणोपेत १२२
कर्वटक २१
काममिथ्याचार २२७
काम्बोजिका १३६
कायितान्त्य १६
कारा २१
कालवर्षी १२९
काशी

| | | | |
|---|---|---|---|
| किटागिरि | १५,१७ | चतुःशाल | ११३ |
| कुक्कुटयुद्ध | १७ | चतुष्क | ६१ |
| कुटकुञ्चिका | २० | चतुष्किका | ६७ |
| कुटिका | ८७ | चित्त | २१,२२ |
| कुमारकयुद्ध | १७ | चेत-शमथ | १२,१२,१४ |
| कुमारिकायुद्ध | १७ | चेतोविमुक्ति | ५३ |
| कुल | १२२ | चोदक | १८ |
| कुलदूषक | १५,१८,१६,८८ | चोदना | ८६,१०७ |
| कृच्छ्र | १७ | च्युत्युपपाद | ५४ |
| कृतावी | २० | छन्द | २८ |
| कृष्णसर्प | ५३ | छेक | ८६ |
| केशनखस्तूप | ६८ | जनपदचारिका | २२ |
| क्लेश | १८ | जम्बूद्वीप | ३१ |
| कोकिलविरुत | १७ | जाम्बूद्वीपक | २३ |
| कोट्टराज | १३० | जलभेरिका | १६ |
| कोप्य | ६४ | जलशिक्यका | १६ |
| कौशाम्बी | २८ | जलयन्त्रक | १६ |
| कौकृत्य | ६३ | जेतवन | ५,६१ |
| क्रयविक्रय | २० | ज्ञप्ति | ६,१० |
| खलुपश्चाद्भक्तिक | १२२ | ज्ञप्तिकर्म | ७ |
| गणना | २० | ज्ञप्तिचतुर्थ | ७ |
| गणसंघ | ११६ | तर्जनीय | ५,७ |
| गण्डक | २७ | तमःस्कन्ध | २७,१८ |
| गण्डी | ६,६,१२ | ताढककुञ्चिका | २३ |
| गति | ५४ | तालवृन्तकुटिका | २६,२८ |
| गन्धकुटि | १३३ | तिर्यञ्च | ५४,५५ |
| गम्या | १२७ | तिलपुपालिका | २३ |
| गाथा | २७ | तीर्थ्य | ८,६ |
| गोपाङ्गना | २७ | त्रिचीवर | १२१ |
| गोमयकार्षी | ६७ | त्रिशाल | १३३ |
| घोरविष | ५३ | त्रिलयन | १३३ |
| चंक्रमण | ६३ | त्रैचीवरिक | १२२ |
| चम्पा | १८७ | दशमी | ६८ |
| चतुर्वर्गमण्डलक | ६४ | दारुपरीक्षा | २० |

दिव्यश्रोत्र ५४
दिव्यचक्षुः १०७
दीपस्थालक ९७
दुःखसंज्ञा ५४
दुष्ठुला ७९,८६,८७
दृष्टिविपत्ति ७,९७
द्रव १६
द्वारकोष्ठक १३३
द्वीपी १२८
द्वेषविराग ५३
घोषिलाराम २८
धर्मकर्म ५,१२
धर्मविषय २०
धर्मप्रद्योत ५३
धर्मता १३६
धर्मोल्का ५६
धार्मकथिक ११२
धूपकटच्छुक ९७
नक्षत्र १९
नरक ५४
नामूतिक १२२
निग्रह २६
निगर्हणीय ५,१२
निमित्त ११२
निश्रय ७
निःसरण १०,११
निःक्षेप २०
निष्क १३६
निरोधसंज्ञा ५४
नैगम १२९
नैमित्तिक १२९
नैवासिक १७
नैवसंज्ञा नासंज्ञा ५४
नैषदिक १२२
न्यास २०
पक्ष ९८
पञ्चाभिज्ञ १२९
पदपरिहाणिका ९७
परमार्थसंघ ११६
परिषत् १८
परिभाषित १८
परिमाणवती ६९
परिवास ११,१२,४१
परीक्षा २०
पट्टप्रचार २०
पांसुकुलिक २८,१२२
पाण्डुलोहितिक १,५,६
पापक १९
पायन्तिक १०९,११०
पाराजिक १०९,११०
पाराजिककथा ११४
पारिवासिक १
पापिकादृष्टि ५
पिण्डकयुद्ध १६
पिण्डपातिक १२२
पुद्गल १८,९,६१
पुद्गलवस्तु ८३
पुनर्वसुक १५,१८,१९
पुरुषयुद्ध १७
पुरुषपरीक्षा २०
पूर्वनिवास ५४
पूर्वापत्ति ३१,३१
पृथग्जनकल्याणक ११७
पृष्ठवाचिका ९,१२
पेयाल ६७,८१
पोषध १,७
पोषधस्थापना १,१०८
पोषधसूत्र १०७

पौद्‌गलिक १२१
प्रकृतिस्थक ६३
प्रज्ञप्ति ६,१२
प्रज्ञाविमुक्त ५३
प्रज्ञास्कन्ध १३२
प्रणाडिका ६७
प्रतिग्राहक २७
प्रतिच्छन्ना ३२,३३
प्रतिज्ञा ६
प्रतिदेशनिकया १०६,११०
प्रतिदेशित ५४
प्रतिवैकारिक १००
प्रतिसरण २१
प्रतिसंस्तरभूमि १२१
प्रत्यन्तरापत्ति ३६
प्रत्याख्यान १७,१८
प्रदेशकालक ७६
प्रव्रज्या ३०,६३
प्रवारणा ७,१०७
प्रहाणसंज्ञा ५४
प्रसावोच्चारकुटी ६७
प्राणातिपात ११७
प्रातिमोक्षसूत्रोद्देश ६३
प्रातिसीम १३०
प्रेत २१
बलान्तीपुत्र २१
बहुश्रुत १२२
बालाग्रपूतिका १३३
बाह्यक १२३
ब्रह्मचर्य ६३
ब्रह्मदत्त १३०
बाहुपरिवर्त १६
ब्राह्मण १२१
भक्तच्छेद २२
भटबलाग्र १२६
भण्डनकारक ५,६,६,१०
भद्रा १३४
भाषणक ६७
भिक्षुण्यववादक ७
भिक्षुपर्षत् १०७
भूयस्यामात्रा २३
मंद्य १२८
मधुस्कन्ध १३६
मध्यमागम १०७
मरणसंज्ञा ५४
महल्लक ८८
महाभूमि ८३
महापुरुषपुद्गल ११७
महिषयुद्ध १७
मातृकाधर ११६
मातृग्राम १६
मानाप्य ११,१२,१३
मारध्वज ५४
मुखदुन्दुभिका १७
मुदिता ५४
मुद्रा २०
मूलपरिवास ११,१२,१३,४१
मूलमानाप्य ७७
मूलापकर्ष ३८,४१
मुष्टि १०८
मृषावाद १२१
मैत्री ५४
मैथुनसंलाप ७८
मैरेय १२८
मोहविराग ५३
मौद्‌गल्यायन १०७
म्रक्षखण्डनिवासी २१
यद्‌भूयस्कालक ७५

यद्भूयः पारिवासिक ८६
यद्भूयो मानाप्यचारिक ८७
यथा वृद्धिका ६
यथा संस्तरिक १२२
यमिका ७२
युक्तकुल ८,६
रत्न २०,१३५
राजकुल ८,६
राजन्य १२२
रात्रिन्दिवस १२४
रात्रिपर्यन्त ७६,७३
रोम ७,८,१०,११
रोहितावर्त १६
लयन १३३
लालटिका १६
लावकयुद्ध १७
लिङ्ग ११२
लिपि २०
लेशि ८८
लोमश १२८
लोहसंघाट १३१
वर्तकयुद्ध १७
वस्तुक ५,६,१२
वस्तूद्दान १
वस्त्रपरीक्षा २०
वर्षाग्र १२३
वाराणसी १२६
वार्षिक(मृत) १२४
वार्षिक(दीर्घ) १२४
विक्षिप्तकसंज्ञा ४,६७
विखलितकसंज्ञा ५४
विज्ञान ५४
विनयकर्म ५,१२
विनयधर ११६
विनयातिसारिणी ७६
विनीलकसंज्ञा ५४
विपडुमुकसंज्ञा ५४
विप्रतिसार ६४
विपूयकसंज्ञा ५४
विभङ्ग २६
विभ्रान्त ६८
विमुक्तिज्ञानदर्शनस्कन्ध १३२
विमुक्तिस्कन्ध १३२
विरागसंज्ञा ५४
विहार ६७
विलोल ६३
विलोहितकसंज्ञा ५४
विवादकारक ५,६,६,१०
वैतरिक १०२,१०३
वैमतिक ६७
वैश्य १२२
वृद्धान्त १४
वृक्षमूलिक १२२
व्यजन ६८
व्याघ्र १२८
व्याध्मातमकसंज्ञा ५४
व्रतपद १२८
शयनासन १,६,१२
शवशीर्षपात्र २६,२८
शरणपृष्ठ ६७
शय्या ६६
शाक्य ८६
शाखामृग १२८
शारिपुत्र १३१
शिक्षा ६३
शीलविपत्ति ७,६७
शीलस्कन्ध १३२
शुक्रविसृष्टि ३२,३३

| | | | |
|---|---|---|---|
| शुल्क | १३६ | समधिस्कन्ध | १३२ |
| शुद्धक | ६७ | सर्वाकारज्ञ | १२५ |
| शुद्धान्तिक | ७२,७३ | समुदाचार | १५,१८,१६ |
| शून्यागार | १०६ | सकृदागामिफल | ५४ |
| शून्यताप्रत्यवेक्षणासंज्ञा | ५४ | सर्पिर्मण्ड | १६ |
| शून्यविहार | १०१ | सङ्गीतनिपात | १०७ |
| शूद्र | १२१ | सङ्घोद्दिष्टक | २० |
| श्रेयक | ५,११,१२ | सामग्रीवेला | ६८ |
| श्रेष्ठी | १६ | सातिसार | ४,३,१२ |
| शैक्षाशैक्ष | ११७ | साङ्घिक | १२१ |
| श्रमणोद्देशक | ७,६७ | सुदत्त | ६१ |
| श्रमणन्याय | ६७ | सुरा | १२८ |
| श्रामणेरक | १२३ | सुजात | १३६ |
| श्रावक | १८ | सूत्रगत | ६३ |
| श्रावस्ती | ५ | सूत्रधर | १६ |
| श्मशानिक | १२२ | स्त्रीयुद्ध | १७ |
| षड्रात्र | ४३ | स्त्रीपरीक्षा | २० |
| संघ | ११६ | स्थापनार्ह | ७३ |
| संघभेद | १,८८ | स्वाध्याय | ११,१२,१४ |
| संख्या | २० | स्वाख्यात | २१ |
| संसारचक्र | २७ | स्मारण | १०७ |
| संस्थागार | १८ | स्मृति | ६१,६६ |
| सङ्घस्थविर | १०७ | हस्तिक्रौञ्च | १६ |
| समूलिका | ११० | हस्तियुद्ध | १७ |
| संवृतिसंघ | ११६ | हस्तिपरीक्षा | २० |
| सर्वज्ञ | १२५ | हस्तोद्धार | ६४ |
| सर्वलाभिक | ६३ | हेतु | ६४ |
| सर्वज्ञानज्ञेयवशिप्राप्त | १२५ | हेतुप्रत्यय | ६४ |
| सम्प्रजानविहारी | १२६ | हैमन्तिक | १२४ |